लक्षणत्वात् अन्योऽन्यानुवर्तित्वाच्च उभयावतावतारकरणं युज्जते, जं पुण भणह उदइओ भावो छव्विधे भावे समोतरइत्ति तं ण जुज्जति, विलक्खत्तणतो अण्णोण्णणणुव्वत्तित्तणतो, आचार्याह–भावसामण्णत्तणतो समोतारो, अथवा सरीरादिउदयभावठियस्स णियमा उवसमियखइयादयो भावा भवंतीति ण दोसो, उक्त उपक्रमः॥ 'से किं तं णिक्खेवे' इत्यादि, जो सामन्नमज्झयणेसु म ओहोत्ति, तस्स णिक्खेवो ओहणिप्फण्णो भवति, अहिकतज्झयणस्स जण्णामं तस्स जो णिक्खेवो स णामणिप्फण्णो, सुत्ते उच्चारिते पयत्थादिकते जधासंभवं पदाणं जो णिक्खेवो सो सुत्तालावयणिप्फण्णो। 'से किं तं ओहणिप्फण्णो इत्यादि सुत्तं कंठ्यं, जाव से किं तं भावअज्झयणे इत्यादि चोद्दसपुव्वधरस्सागमोवउत्तस्स अंतमुहुत्तमेत्तोवयोगकाले अत्थोवलंभोवयोगपज्जया जे ते समयावहारेण अणंताहिवि उस्सप्पिणीओसप्पिणीहिं णोवहिज्जंति ते अतो भणितं आगमतो भावअज्झीणं, जाणए उवउत्त इत्यर्थः, णोआगमतो भावज्झीणं वायणायरियस्स उवयोगभावो आगमो, वइकाययोगा अ णोआगमो एवं णोआगमो भवति, सेसं कंठ्यं, 'से किं तं आये' इत्यादि सुत्तं कंठ्यं जाव संतसारसावतेज्जस्स आएत्ति, संतं श्रीघरादिषु विद्यमानं सायतेजं-स्वाधीनं दानक्षेपग्रहमोक्षभोगेषु, सेसं कंठ्यं। 'से किं तं खवणा' इत्यादि, णाणादीणं वड्ढी इच्छिज्जति जा पुण तेसिं खवणा सा अप्पसत्था भवति, सेसं कंठ्यं। 'से किं तं णामणिप्फण्णे' इत्यादि (१५०–२५०) सूत्रं कंठ्यं। जाव 'जस्स सामाणितो' गाहा (*१२६–२५५) यस्य ययोः येषां यथा सामाणितोत्ति–अप्रविसरितः 'यो समो' गाथा (*१२७–२५५) गयट्ठा 'जह मम' गाथा (*१२८–२५६) तेण समणो भावसामादियजुत्तो भवति 'णत्थि य से' गाहा (*१२९–२५६) भावसामायिकयुक्तस्य अन्यः श्रमणपर्यायः 'उरगगिरि' गाहा (*१३०–२५६) 'सारयसलिलव्व सुद्धहियतो परी-

गद्दोवमग्गगाउणा गिरिव्व णिप्पकंपो जलणो इव तवतेयसा सागरो इव गुणरयणपुण्णो णाणादीहिं वा अगाहो अगाहत्तणतो चेव गंभीरो वा गगणे य णिरालंबो मयणादिसु त रुचिरविसमेसु सुहदुक्खकरेसु हमरो इव अणियतवृत्ती संसारभावेसु णिव्वुव्विग्गो मियो इव धरणिरिव सव्वफासविसहे जलरुहं व जधा पंके जातं जले वुड्ढं णोपलिप्पति पंकरएण तहा भावसामादियट्ठितो कामभोगेसु संवुड्ढो णोवलिप्पति कामभोगेसु, रविरिव अण्णाणविघातकरे पवणोव अपडिबद्धो गामणगरादिसु 'तो समणो' गाथा (*१३१–२५६) कंठ्या, 'से किं तं अणुगमे' इत्यादि (१५१–२५८) जावंतिया कयर कज्जिस्संति य णामादिणिक्खेवेण अत्थाणुगमा ते सव्वे णिक्खेवणिज्जुत्ती, एतं णिक्खेवणिज्जुत्तीस्वरूपं, 'से किं तं उवोग्घात' इत्यादि सुत्तं कंठ्यं, 'से किं तं सुत्तफासिय' इत्यादि, सुत्तस्स उच्चारणमुपलक्षणं इमं, उवलबहुलसिलाए णंगलगमणं व खलियं, ण खलियं अखलियं, अण्णमण्णज्झयणसुत्तं संमेलिय णाणावण्णसंकररासिव्व अण्णोअण्णअज्झयणसरिससुत्ताण विरइत्तु आम्रेडितकरणं वच्चामेलियं, यथा गणधरनिबद्धमित्यर्थः पादबिंदुमत्तादिएहिं पडिपुण्णं उदत्तादिएहिं घोसेहिं पडिपुण्णघोसं गुरुणा कंठे वड्डियस्सरेण जीहोट्ठाण उत्तरकरणेण य विप्पमुक्कं सेसेण पडिच्छियं सुत्तं, ण पुत्थयाहीतंति, सेसं कंठ्यं जाव पदेण पदं च वत्तइस्सामित्ति, इत्थ पदं २ वत्तइस्सामीति वत्तव्वे किं पदेण पदत्ति भणियं?, उच्यते, णियमा उद्देसज्झयणादिसु जे सुत्तपदा तेसिं सुत्तेण वा अत्थेण वा उभएण वा अण्णोण्णसंबद्धाण एस चेव उच्चारणोवाओ, यथा लोए वत्तारो घरेण घरं संबद्धं रहो रहेण संबद्धो, अथवा संबद्धप्रदर्शनार्थं णगारेणोच्चरणं कृतं, प्रदेशार्थकरणं वत्तव्वा, अहवा पदेणंति सुत्तपदेणुवलद्धेणं अत्थपदं वत्तिज्जत्ति, पदेण पदं वत्तिस्सति, अहवा अणुवलद्धत्थपदस्स प्रतिपदमर्थकथनप्रकारः प्रदर्श्यते पदेण पदं वत्तइस्सामित्ति, कथं?, उच्यते 'संधिया य पदं

चेव ' गाहा (*१३४-२६१) संधिया गया, पदंति करेमित्ति पदं भंतेत्ति पदं, सामायिकंति पदं, पयत्थो अभ्युपगमे करेमित्ति, भंते ! इत्यामंत्रणं, सामाइयं पदं, सेसं कंठ्यं, विग्गहोत्ति समासो भाणियव्वो, सुत्तस्स अत्थस्स वा दोसुब्भावणा चालणा, दोसपरिहरणत्थं उत्तरपदाणं अत्थपसाधकं पसिद्धी, वर्द्धनं वृद्धिः व्याख्या इत्यर्थः, जम्हा सुत्तं अत्थो य विकप्पेहिं अणेगधा वक्खाणकरणतो वद्धति, एवं वक्खाणपदेण सुत्तपदं वत्तियं भवति, गतो अणुगमो ॥ ' से किं तं णय ' इत्यादि ( १५२-२६४ ) णेगमादि मत्त मूलणता, तत्थ णेगमे भवति ' णेगेहिं ' इत्यादि ( *१३५-२६४ ) गामवसहिवत्थगादिट्ठंतेहि णेगमो भाणियव्वो, संगहो इमो भवति ' संगहिय ' इत्यादि ( *१३६-२६४ ) मिम्मयरययसुवण्णतंबयमहप्पकिण्हादिवण्णाविसेसणाविसिट्ठेसुवि घडेसु एक्कं अविसिट्ठं घडभावं इच्छति, भूतेसु कठिणगुणं व । ववहारो इमो 'वच्चई' त्यादि, तीतमणागतवट्टमाणेसु सव्वावत्थासु दिट्ठं घडं इच्छति लोगसंववहारपरत्तणतो ववहारस्स, उज्जुसुयस्स इमो 'उज्जुसुत्तो पडुप्पण्ण' इत्यादि ( *१३७-२६४ ) अतीयकालघडं अणुप्पण्णकालघडं च अभावत्तणतो असंववहारत्तणतो य णेच्छति खरविसाणं व, 'सद्दणतो इच्छति' इत्यादि सुत्तं, तं चेव पडुप्पण्णकालियं अत्थं उजुसुत्ताभिप्पायतो विसेसियतरं इच्छति, जहा तिण्णि णेच्छइ णामघडं ठवणाघडं ज्ञशरीरभव्यशरीरद्रव्यघडं च, जलाभरणादिकज्जसाधणसमत्थं रिक्कमोमंथियं वा जहा कहंचि ट्ठियं इच्छतीत्यर्थः, समभिरूढो इमो–' वत्थूतो ' इत्यादि (*१३८-२६४) णेच्छति, इह एगत्थिया, एगट्ठिय एगट्ठिय अक्खराभिलावभिण्णत्तणतो णियमा अत्थभेदो, अत्थभिण्णत्तणतो वत्थुभेदो, एवं समभिरूढो एगट्ठिया णेच्छति, जहा घटः कुटो न भवति, कथं?, उच्यते ! 'घट चेष्टायां' 'कुट कौटिल्ये' एवं अभिधाणसमं अत्थं आरुमतीति समभिरूढो भवतीत्यर्थः, एवंभूतो इमं आह–' वंजण ' इत्यादि, वंजणं घटः अत्थो सचेट्ठा

जलाहरणाइया, एवं जया घटो जलाहरणकियाजुत्तो भवति तदा उइयघरं वा अवत्थं, एवं च सद्दे णातो अत्थो विसेसिज्जति, अन्यतो विवक्षति घ्यानं, एवंविहं भाणं वत्थुभूतं भवति, अतो एवंभूतो भवतीत्यर्थः, एते णेगमादि सत्तवि णया दोसु तु अवतरंति–णाणनए चरणनये, णाणणये सत्त णेगमादयो णया इमेरिसं णाणोवदेसं इच्छंति–' णातंमि गिण्हितव्वे ' गाथा ( *१३९–२६७ ) णायंमि नाम सम्मं परिच्छिन्ने, तओ से दुहा गप्पते, तेसु य णाति जो घेत्तव्वो आदीयव्वो तस्स आसादने गेण्हेयव्वो कज्जसाधकः, उक्तस्य विपक्खभूतो ण घेतव्वो, जतितव्वंति मनोवायकायेहिं घेत्तव्वो अगहणगण्हियव्वे अघेत्तव्वे उदासीरनेन ' एव ' मित्यवधारणे घेत्तव्वे वा पयतियव्वं इति–उवदंसणे, जो एवंविहो उवदेसो सो सव्वो णयणामा भवतीत्यर्थः, एता चेव णेगमादीया चरणगुणाठितमेरिसं पडिवयंति ' सव्वेसिं ' गाथा ( *१४०–२६७ ) सव्वेत्ति मूलसाहप्पसाहभेदेणा अप्पणो अभिप्पाएण णेगप्पगारा एयस्स य णयस्स भेदा जे तेसिं वत्तव्वया-भणितं अहवा एगस्स वत्थुणो पज्जवा वत्तव्वत्ति वत्त्वा, अहवा वत्तव्वा गतिजीवादि तच्च सव्वभेदाण णिसामेत्ता-सोतुं अवधारितुं वा णिसामित्तए तंमि एवंविहणयवत्तव्वयंमि, किं गव्वणयविसुद्धं ?, उच्यते–' तं सव्व ' इत्यादि चरणमेव चरणं वा चरिओ गुणा खमादिया अणेगविधा तेसु जहट्ठिओ साहू सो सव्वणयसंमतो भवतीति ॥ इति श्रीश्वेताम्बराचार्यजिनदासगणिमहत्तरपूज्यपादानामनुयोगद्वाराणां चूर्णिः ॥

॥ इति सम्मत्ता अनुयोगद्वारचूर्णिः ॥

इति सम्मता अनुयोगद्वारचूर्णिः

# श्रीहरिभद्राचार्यकृता अनुयोगद्वारटीका.

नमोऽर्हते ॥ प्रणिपत्य जिनवरेन्द्रं त्रिदशेन्द्रनरेन्द्रपूजितं वीरम् । अनुयोगद्वाराणां प्रकटार्थां विवृतिमभिधास्ये ॥ १ ॥ प्रक्रान्तोऽयमर्हद्वचनानुयोगः, अयं च परमपदप्राप्तिहेतुत्वाच्छ्रेयोभूतो वर्त्तते, श्रेयांसि बहुविघ्नानि भवन्ति, तथा चोक्तम्-"श्रेयांसि बहुविघ्नानि भवन्ती" त्यादि श्लोकः, अतोऽस्य प्रारम्भ एव विघ्नविनायकोपशान्तये मङ्गलाधिकारे नन्दिः प्रतिपादितः, साम्प्रतमनुयोगद्वाराध्ययनमारभ्यते, अथास्यानुयोगद्वाराध्ययनस्य कोऽभिसंबंध ? इति, उच्यते, इहार्हद्वचनानुयोगस्य प्रक्रान्तत्वात्तस्य चानुयोगद्वारमन्तरेण प्रतिपादयितुमशक्यत्वादनुयोगद्वाराणां च साकल्यतोऽपि प्रायः प्रत्यध्ययनमुपयोगित्वान्नन्द्यध्ययनव्याख्यानसमनन्तरमेवानुयोगद्वाराध्ययनावकाश इत्ययमभिसंबंधः, तदनेन सम्बन्धेनाऽऽयातमिदमनुयोगद्वाराध्ययनं, अस्य चाध्ययनान्तरत्वात् साकल्यतोऽपि प्रायः सकलाध्ययनव्यापकत्वान्महार्थत्वाच्चादावेव मङ्गलशब्दाभिधानपूर्वकमुपन्यासमुपदर्शयता ग्रन्थकारेणेदमभ्यधायि 'णाणं पंचविहं पण्णत्त' मित्यादि,(१-१)अत्राह-इह मङ्गलाधिकारे नन्दिः प्रतिपादित एव, ततश्चानर्थक एव अस्य सूत्रस्योपन्यास इति, अत्रोच्यते, नैतदेवं, अस्याक्षेपस्य चाध्ययनान्तरत्वादित्यादिनैवानवकाशत्वात्, अनियमप्रदर्शनार्थत्वाच्च तथाहि-नायं नियमो नन्द्यध्ययनानुयोगमन्तरेणास्यानुयोगो न कर्त्तव्य इति, यदा यदा च क्रियते तदा सार्थक एव इति, यथोक्तोपन्यासस्तु प्रायोवृत्त्यपेक्षयाऽनवद्य एव, अन्ये तु व्याचक्षते-कश्चिदाचार्यं देशजातिषट्त्रिंशद्गुणालंकृतं कश्चिद्विनेयः सविनयमुक्तवान्-भगवन् ! अनुयोगद्वारप्ररूपणया मे क्रियतामनुग्रहः, ततस्तमसावाचार्यो योग्यमधिगम्य अव्यवच्छित्तयेऽनुयोगद्वारप्ररूपणायां प्रवर्त्तमानो विघ्नविनायकोपशान्तये

भावमङ्गलाधिकारे इदमुपन्यस्तवान्–'णाण' मित्यादि, अस्य सूत्रस्य समुदायार्थोऽवयवार्थश्च नन्द्यध्ययनटीकायां प्रपञ्चतः प्रतिपादित एवेति नेह प्रतिपाद्यत इति। 'तत्थ' इत्यादि, (२-३) तत्र-तस्मिन् ज्ञानपञ्चके चत्वारि ज्ञानानि–मत्यवधिमनःपर्यायकेवलाख्यानि, किं ?, व्यवहारनयाभिप्रायतः साक्षादसंव्यवहार्यत्वात्स्थाप्यानीव स्थाप्यानि, यतश्चैवमतः स्थापनीयानि, तिष्ठतु तावत् न तैरिहाधिकारः, अथवा स्वरूपप्रतिपादनेऽप्यसमर्थत्वात्स्थाप्यानि, इह चानुयोगद्वारप्रक्रमेऽनुपयोगित्वात्स्थापनीयानि, अथवा स्थाप्यानि सांन्यासिकानि, न तेषामिहानुयोगः, पुनर्विवृणोति-स्थापनीयानीत्यर्थः, यतश्चैवमतः 'नो उद्दिस्सन्ती' त्यादि, नो उद्दिश्यन्ते नो समुद्दिश्यन्ते नो अनुज्ञायंते, तत्र त्वयेदमध्ययनं पठितव्यमित्युद्देशः १ तदेवाहीनादिलक्षणोपेतं पठित्वा गुरोर्निवेदयति, तत्रैवंविधं स्थिरपरिचितं कुर्वीति समनुज्ञा समुद्देशः २ तथा कृत्वा गुरोर्निवेदिते मन्थधारणं शिष्याध्यापनं च कुर्वीति अनुज्ञा ३ 'सुयणाणस्से' त्यादि, इह श्रुतज्ञानस्य स्वपरप्रकाशकत्वाद् गुर्वदेशायत्तत्वाच्च किन्तूद्देशः समुद्देशः अनुज्ञा अनुयोगश्च प्रवर्त्तत इति, संक्षेपेणोद्देशादीनामर्थःकथित एव। अधुना शिष्यजनानुग्रहार्थं विस्तरेण कथ्यते-तत्थ आयारादिअंगस्स उत्तरज्झयणादिकालियसुयखंधस्स य उववाइयादिउक्कालियअंगज्झयणस्स य इमो उद्देसणविही, पुव्वं सज्झायं पट्ठवेत्ता ततो सुयगाही विण्णत्तिं करेइ-इच्छाकारेण अमुगं मे सुयमुद्दिसह, ततो गुरू इच्छामोत्ति भणाति, तओ सुयगाही वंदणयं देइ, पढमं १, ततो गुरू उट्ठित्ता चेइए वंदइ, ततो वंदियपच्चुट्ठियसुयग्गाहीं वामपासे ठवेत्ता जोगुक्खेवुस्सग्गं सगवीसुस्सासकालियं करेइ, ततो उस्सरित-कड्ढितपणवीसत्यओ तहट्ठिओ चेव पंचनमोक्कारं तिण्णि वारं उच्चारेत्ता 'नाणं पंचविहं पण्णत्त' मित्यादि उद्देसनन्दीं कड्ढइ, तीसे य अंते भणादि-इमं पुण पट्ठवणं पडुच्च इमस्स साधुस्स इमं अंगं सुयखंधं अज्झयणं वा उद्दिस्सामि, अहंकारवज्जणत्थं भणादि-खमास-मणाणं हत्थेणं सुत्तेणं अत्थेणं तदुभएणं च उद्दिट्ठं, नंतरं सीसो इच्छामोत्ति भणित्ता वंदणं देइ, वितियं, ततो उट्ठितो भणादि-संदिसह किं

भणामो १, तवो गुरू भणादि-वंदित्ता पवेयसुत्ति, ततो सीसो इच्छामोत्ति भणित्ता वंदणगं देइ, तइयं, सीसो पुण उट्ठितो भणादि-तुम्हेहिं मे अमुगं सुयमुद्दिट्ठं इच्छामि अणुसट्ठिं, ततो गुरू भणति-जोगं करेहिति, एवं संदिट्ठो इच्छामोत्ति भणित्ता वंदणं देइ चउत्थयं, एत्थंतरे णमोक्कार-परो गुरुं पदक्खिणेइ, पदक्खिणित्ता पुरओ ठिच्चा भणादि-तुम्हेहिं मे अमुगं सुतमुद्दिट्ठं, ततो गुरुणा जोगं करेहित्ति संदिट्ठो तओ इच्छामोत्ति भणित्ता वंदित्ता य पदक्खिणं करेइ, एवं तइयवारंपि, एते य ततोऽवि वंदणा एक्कं चेव वंदणट्ठाणं, तइयपदक्खिणंते य गुरुस्स पुरओ चिट्ठइ, ताहे गुरू निसीदवि, निसण्णयस्स य गुरुणो पुरओ अद्धावणयकाओ भणति-तुब्भं पवेदितं संदिसह साहूणं पवेदामि-त्ति, ततो गुरू भणावि-पवेदिहित्ति, ततो इच्छामोत्ति भणित्ता पंचमं वंदणगं देइ, वंदियपच्चुट्ठितो य कयपंचणमोक्कारो छट्ठं वंदणयं देइ, पुणो य वंदियपच्चुट्ठिओ तुब्भं पवेदितं साहूणं पवेदितं संदिसह करेमि उस्सग्गं, ततोणं गुरू भणति-करेहि, ताहे वंदणयं देइ सत्तमयं। एते य सुतपच्चया सत्त वंदणगा। ततो वंदियपच्चुट्ठितो भणति-अमुगस्स सुयस्स उद्दिसावणं करेमि उस्सग्गं अन्नत्थ ऊसासिएणं जाव वोसि-रामित्ति, ततो सत्तावीसुस्सासकालं ठिच्चा लोगस्स उज्जोअगरं चिंतित्ता उस्सारित्ता भणादि-णमो अरहंताणंति, लोयस्सउज्जोअगरं कड्ढित्ता सुयसमत्तउद्देसकिरियत्तणओ अन्ने फेट्टावंदणयं देइ, जं पुण वंदणगं देंति तं न सुतपच्चयं, गुरूवकारित्ति विणयपडिवत्तिओ अट्ठमं वंदणं देति। एवं अंगादिसुं समुद्देसेऽवि, णवरं पवेदिते गुरू भणति-थिरपरिजितं करेहित्ति, णंदी य ण कड्ढिज्जति, जोगुक्खेवुस्सग्गो य ण कीरइ, ण य पदक्खिणं तओ वारे करिज्जति, जेण णिसण्णो गुरू समुद्दिसति, एवं अंगादिसु अणुण्णाए जहा उद्देसे तहा सव्वं कज्जति, णवरं पवेदिते गुरू भणति-सम्मं धारय अण्णेसिं च पवेयसुत्ति, जोगुक्खेवुस्सग्गो ण य भवति, एवं आवस्सगादिसु पइण्णगेसु य तंदुलवेयालियादिसु एसेव विही, णवरं सज्झाओ ण पट्ठविज्जइ, जोगुक्खेवउस्सग्गो ण कीरइ, एवं सामादियादिसुवि अज्झयणेसु उद्देसएसु य उद्दिसमाणेसु चिइवंदणपद-

क्खिरणादिविसेसकिरियावज्जिया सत्त चेव वंदणगा पुव्वकमेणेव भवंति, जया पुण अणुओगो अणुण्णाविज्जति तदा इमो विही-पसत्थेसु तिहीकरणमुहुत्तणक्खत्तेसु पसत्थे य खेत्ते जिणाययणादौ भूमी पमज्जित्ता दो णिसिज्जाओ करेंति, एक्का गुरुणो बितिया अक्खाणंति, तओ परिमकाले पवेदिते णिसज्जाए णिसण्णा गुरू अहज्जाउवगरणोट्ठिओ सीसो ततो दोवि ते गुरू सीसो य मुहपोत्तियं पडिलेहिन्ति, तओ सीसो वारसावत्तगं वंदणगं दाउं भणति-संदिसह सज्झायं पट्ठवेमि, तओ दुययावि सज्झायं पट्ठवेंति, ततो पट्ठविते गुरू णिसीदति, ततो सीसो वारसा-वत्तेण वंदति, ततो दोवि उट्ठेत्ता अणुओगं पट्ठवेंति, ततो पट्ठविते गुरू णिसीदति, ततो सीसो बारसावत्तेण वंदति, वंदिते गुरुणा अक्खामंतणे कते गुरू निसेज्जाओ उट्ठेति, ततो निसेज्जं पुरओ काउं अधीयसुयं सीसं वामपासे ठवेत्ता चेतिए वंदंति, समत्ते चेइयवंदणे गुरू ठितो चेव णमोक्कारं कड्ढित्ता णंदिं कड्ढति, सीसे य अन्ते भणाति-इमस्स साहुस्स अणुओगं अणुजाणामि खमासमणाणं हत्थेणं दव्वगुणपज्जवेहिं अणुण्णाओ, ततो सीसो वंदणगं देइ, उट्ठितो भणाति-संदिसह किं भणामो?, तओ गुरू भणति-वंदणं दाउं पवेदेह, ततो वंदति, वंदित्ता उट्ठितो भणाति तुब्भेहिं मे अणुओगो अणुण्णाओ, इच्छामो अणुसट्ठिं, ततो गुरू भणाति-सम्मं धारय अण्णेसिं च पवेदय, ततो वंदति, वंदित्ता गुरुं पदक्खि-णेति, एवं ततो वारे, ताहे गुरू निसेज्जाए णिसीयति, ताहे सीसो पुरओ ठितो भण्णति-तुब्भं पवेदितं संदिसह साहूणं पवेदयामि, एवं शेषं प्राग्वत्। ततो उस्सग्गस्संते वंदेत्ता सीसो गुरुं सह निसेज्जाए पदक्खिणीकरेति, वंदेइ य, एवं ततो वारा, ताहे उट्ठेत्ता गुरुस्स दाहिणभुया-सण्णे णिसीदति, ततो से गुरू गुरुपरंपरागए मंतपए कहेति ततो वारा, ततो वड्ढंतियातो ततो अक्खमुट्ठीतो गंधसहियातो देति, ताहे गुरू निसज्जाओ उट्ठेइ, सीसो तत्थ निसीदति, ताहे सह गुरुणा अहासण्णिहिता साहू वंदणं देंति, ताहे सोऽवि निसेज्जाठिओ अणुओगी 'णाणं पंचविहं पण्णत्त' मित्यादि सुत्तं कड्ढति, कड्ढित्ता जहासत्तिं वक्खाणं करेति, वक्खाणे य कते साहूणं वंदणं देंति, ताहे सो उट्ठेइ, णिसे-

ज्जाओ, पुणो गुरू चेव तत्थ निसीयति, तओ अणुओगविसज्जणत्थं काउस्सग्गं करेंति कालस्स य पडिक्कमंति, ततो अणुण्णायाणुओगो साहू निरुद्धं पवेदेति। एवमेते उद्देशादयः श्रुतज्ञानस्यैव प्रवर्त्तन्ते, न शेषज्ञानानामिति, न चेहोद्देशादिभिरधिकारः, किं तर्हि ?, अनुयोगेन, तस्यैव प्रक्रान्तत्वादिति, 'जति सुतणाणस्से' त्यादि ( ३-६ ) ( ४-६ ) ( ५-७ ) सर्वं निगदसिद्धं यावत् 'इमं पुण पट्ठवणं पडुच्च आवस्सगस्साणुओगो'त्ति, नवरमिमां पुनरधिकृतां प्रस्थापनां प्रतीत्य, प्रारम्भप्रस्थापनामेनामाश्रित्यावश्यकस्य, अवश्यं क्रियानुष्ठानादावश्यकं तस्यानुयोगः— अर्थकथनविधिस्तेनाधिकार इत्यर्थः, इहानुयोगस्य प्रक्रान्तत्वात्तद्गतवक्तव्यतालम्बनायाः खल्वस्या द्वारगाथायाः प्रस्तावः, तथथा-'णिक्खेवेगट्ठ निरुत्ति विही पवित्ती य केण वा कस्स। तद्दार भेद लक्खण तदरिहपरिसा य सुत्तत्थो ॥१॥ अस्याः समुदायार्थमवयवार्थं च ग्रन्थान्तरे स्वस्थान एव व्याख्यास्यामः, अत्र तु कस्येति द्वारे 'इमं पुण पट्ठवणं पडुच्च आवस्सगस्स अणुओगो'त्ति सूत्रनिपातः, 'जइ आवस्सगस्से'त्यादि, ( ६-९ ) प्रश्नसूत्रं,निर्वचनसूत्रं चोत्तानार्थमेव। नवरमाह चोदकः-इहावश्यकं किमङ्गं किमङ्गानीत्यादिप्रश्नसूत्रस्यानवकाश एव, नन्द्यनुयोगादेवावगतत्वात्, तथाहि-तत्रावश्यकमनंगप्रविष्टश्रुताधिकार एव व्याख्यातं, तथेहाप्यङ्गबाह्योत्कालिकादिक्रमेणैव आवश्यकस्योद्देशादीनां प्रतिपादितत्वादिति, अत्रोच्यते, यत्तावदुक्तं 'नन्द्यनुयोगादेवावगतत्वा' दिति तदयुक्तं, यतो नायं नियमोऽवश्यमेव नन्दिरत्रैव व्याख्येयः, कुतो गम्यत इति चेत्, अधिकृतसूत्रोपन्यासान्यथानुपपत्तेः, इदमेव सूत्रं ज्ञापकमनियमस्येति, मङ्गलार्थमवश्यं व्याख्येय इति चेत् न, ज्ञानपंचकाभिधानमात्रस्यैव मङ्गलत्वात्। यथोक्तं 'इहाप्यनङ्गप्रविष्टोत्कालिकादिक्रमेणैवाऽऽवश्यकस्योद्देशादयः प्रतिपादिता' इति, एतदपि न बाधकमन्यार्थत्वात्, इहाङ्गप्रविष्टादिभेदभिन्नस्य श्रुतस्योद्देशादयः प्रवर्त्तन्ते इति ज्ञापनार्थमेतदित्यन्यार्थता, अन्ये तु व्याचक्षते-चारित्र्यपि भिन्नकर्मक्षयोपशमजन्यत्वात् ज्ञानस्यानाभोगबहुलो भवति माषतुषवत् सोऽपि प्रज्ञापनीय एवेति दर्शनार्थं ॥

इहाधिकृतानुयोगविषयीकृतशास्त्रनाम आवश्यकश्रुतस्कन्धाध्ययनानि, नाम च यथार्थादिभेदात् त्रिविधं, तद्यथा-यथार्थमयथार्थमर्थशून्यं च, तत्र यथार्थं प्रदीपादि अयथार्थं पलाशादि अर्थशून्यं डित्थादि, तत्र यथार्थं शास्त्राभिधानमिष्यते, तत्रैव समुदायार्थपरिसमाप्तेः, यत एवमतस्तन्निरूपयन्नाह-' तम्हा आवस्सयं ' इत्यादि, ( ७-१० ) तस्मादावश्यकं निक्षेप्स्यामीत्यादि उपन्याससूत्रं प्रकटार्थमेव, चोदकस्त्वाह-'खंधो नियमज्झयणा अज्झयणावि य ण खंधयईरित्ता । तम्हा ण दोवि गेज्झा अण्णतरं गेण्ह चोदेति ॥ १ ॥' आचार्यस्त्वाह-' खंधोत्ति सत्थनामं तस्स य सत्थस्स भेद अज्झयणा । कुड भिण्णत्था एवं दोण्ह गहे भणति तो सूरी ॥ १ ॥' साम्प्रतं यदुक्तं 'आवश्यकं निक्षेप्स्यामी' त्यादि, तत्र जघन्यतो निक्षेपभेदनियमनायाह-'जत्थ' गाहा ( १-१० ) व्याख्या-यत्र जीवादौ वस्तुनि यं जानीयात्, कं ?-निक्षेपं, न्यासमित्यर्थः, यत्तदोर्नित्याभिसंबंधात् तन्निक्षिपेत् निरवशेषं-समग्रं, यत्रापि च न जानीयात्समग्रं निक्षेपजालं 'चतुष्कं' नामादि भावान्तं निक्षिपेत् तत्र, यस्माद् व्यापकं नामादिचतुष्टयमिति गाथार्थः। 'से किं त'मित्यादि ( ८-१० ) प्रश्नसूत्रं, अत्र 'से' शब्दो मागधदेशीप्रसिद्धः अथशब्दार्थे वर्त्तते, अथशब्दश्च वाक्योपन्यासार्थः- तथा चोक्तं 'अथ प्रक्रियाप्रश्नानन्तर्यमङ्गलोपन्यासार्थप्रतिवचनसमुच्चयेषु, किमिति परिप्रश्ने, तदिति सर्वनाम पूर्वप्रक्रान्तावमर्शि, अतोऽयं समुदायार्थः-अथ किं तदावश्यकं ?, एवं प्रश्ने सति आचार्यः शिष्यवचनानुरोधेनादराधानार्थं प्रत्युच्चार्य निर्दिशति-अवश्यकर्त्तव्यमावश्यकं, अथवा गुणानामावश्यमात्मानं करोतीत्यावश्यकं यथा अंतं करोतीत्यंतकः, प्राकृतशैल्या वा 'वस निवास' इति गुणशून्यमात्मानमावासयति गुणैरित्यावासकं, चतुर्विधं प्रज्ञप्तं-चतस्रो विधा अस्येति चतुर्विधं प्रज्ञप्तं-प्ररूपितं अर्थतस्तीर्थकृद्भिःसूत्रतो गणधरैः, तद्यथा-नामावश्यकमित्यादि, 'से किं त' मित्यादि (९-११) तत्र नाम अभिधानं नाम च तदावश्यकं च नामावश्यकं, आवश्यकाभिधानमित्यर्थः, इह नाम्न इदं लक्षणं 'यद्वस्तुनोऽभिधानं स्थितमन्यार्थे तदर्थनिरपेक्षम् । पर्यायानभिधेयं च नाम याहच्छिकं च तथा ॥ १ ॥ यस्य वस्तुनः 'ण'मिति

मिति नाम क्रियते 'सेत्त' मित्यादि, तदेतन्नामावश्यकमिति समुदायार्थः, अवयवार्थ-
वाक्यालङ्कारे जीवस्य वा आवश्यकमिति नाम क्रियते 'सेत्त' मित्यादि,
स्त्वयं-'आवस्सयंति नामं कोई कामत्ति अहिन्छिया कुणति । दीसइ लोए एवं जह साहिग देवदत्तादी ॥ १ ॥ अजीवेसुवि केसुवि आवासं
भणति एगदव्वं तु । जह अचित्तदुममिणं भणंति सप्पस्स आवासं ॥ २ ॥ जीवाण बहूण जहा भणंति अगणिं तु मूसगावासं । अजीवा-
पिट्ठ बहवो जह आवासं तु सउणिस्स ॥ ३ ॥ उभयं जीवाजीवा तण्णिप्फण्णं भणंति आवासं । जह राईणावासं देवावासं विमाणं वा ॥ ४ ॥
मणुस्सापणुभयाणं कप्पावासं भणंति इंदस्स । नगरनिवासावासं गामावासं च इच्चादि ॥ ५ ॥ 'से किं' तमित्यादि ( १०-१२ ) तत्र स्थाप्यत
इति स्थापना स्थापना चावश्यकं चेति स्थापनावश्यकं, आवश्यकवतः स्थापनेत्यर्थः, स्थापनालक्षणं चेदं-'यत्तु तदर्थवियुक्तं तदभिप्रायेण यच्च तत्करणिः।
लेप्यादि कर्म तत्स्थापनेति क्रियतेऽल्पकालं च ॥ १ ॥', यत् 'ण' मिति वाक्यालङ्कारे काष्ठकर्म्मणि वा यावदावश्यकमिति स्थापना स्थाप्यते,
' सेत्त ' मित्यादि, तदेतत्स्थापनाऽऽवश्यकमिति समुदायार्थः, अवयवार्थस्त्वयं-'आवस्सयं करेन्तो ठवणाए जं ठविज्जए साहू । तं तह ठवणा-
वासं भण्णति साहेज्जिमेहिं तु ॥ १ ॥' काष्ठ कर्म्म काष्ठकर्म्म तच्च कुट्टिमं तस्मिन्, चित्रकर्म्म प्रतीतं, पुस्तकर्म्म धीउल्लिकादि वस्त्रपल्लव-
समुत्थं वा संपुटकं मध्यवर्त्तिकालेख्यं ना पत्रच्छेदनिष्फण्णं वा, उक्तं च-'धीउल्लिगादि वेल्लियकम्मादिनिव्वत्तियं च जाणाहि । संपुडगवत्ति-
लिहियं पत्तच्छेज्जे य पोत्थंति ॥ १ ॥' लेप्यकर्म्म प्रतीतं, ग्रन्थिसमुदायजं पुष्पमालावत् जालिकावद्वा, निर्वर्त्तयन्ति च केचिदतिशयनैपुण्या-
न्निवात्यत्राप्यावश्यकवन्तं साधुमित्येवं वेष्टिमादिष्वपि भावनीयं, तत्र वेष्टिमं वेष्टनकसंभवमानन्दपुरे पूरकवत्, फलाकुराऊभावतो वा
कश्चिद् वस्त्रवेष्टनेन चावश्यकक्रियायुक्तं यतिमवस्थापयति पूरिमं-भरिमं सगर्भरीतिकादिमूर्त्तप्रतिमादिवत्, संघातिमं कंचुकवत्, अक्षः-चन्दनकः
वराटकः-कपर्दकः, एतेषु एको वा आवश्यकक्रियावान् अनेके वा वद्धंतः सद्भावस्थापनाया वा असद्भावस्थापनया वा, तत्र तदाकारवती सद्भाव-

स्थापना अतदाकारवती चासद्भावस्थापनेति, उक्तं च-"अक्खे वराडए वा कट्ठे पोत्थे व चित्तकम्मे वा'। सब्भावमसब्भावं ठवणाकायं वियाणाहि ॥ १ ॥ लेप्पगहत्थी हत्थित्ति एस सब्भाविया भवे ठवणा। होइ असब्भावे पुण हत्थित्ति निराकिती अक्खो ॥ २ ॥' आवश्यकमिति क्रियाक्रियावतोरभेदात्तद्वानत्र गृह्यते, स्थापना स्थाप्यते-स्थापना क्रियते 'से त' मित्यादि, तदेतत्स्थापनाऽऽवश्यकं। साम्प्रतं नामस्थापनयोरभेदाशंकापोहायेदं सूत्रं 'नामठवणाण' मित्यादि, ( ११-१५ ) कः प्रतिविशेषो नामस्थापनयोरिति समासार्थः। आक्षेपपरिहारलक्षणो विस्तरार्थस्त्वयं-'भावरहितम्मि दव्वे णामट्ठवणाओ दोवि अविसिट्ठा। इतरेतरं पडुच्चा किह व विसेसो भवे तासिं ? ॥ १ ॥ कालकओऽय विसेसो णाम ता धरति जाव तं दव्वं। ठवणा दुहा य इतरा यावकहा इत्तरा इणमो ॥ २ ॥ इह जो ठवणिंदकओ अक्खो सो पुण ठविज्जए राया। एवित्तर आवकहा कलसादी जा विमाणेसु ॥ ३ ॥ अहव विसेसो भण्णति अभिधाणं वत्थुणो णिरागारं। ठवणाओ आगारो सोवि य णामस्स णिरवेक्खो ॥ ४ ॥' 'से किं त' मित्यादि, ( १२-१४ ) तत्र द्रवति-गच्छति तांस्तान् पर्यायानिति द्रव्यं, द्रव्यं च तदावश्यकं च द्रव्यावश्यकं, भावावश्यककारणमित्यर्थः, द्रव्यलक्षणं चेदं- 'भूतस्य भाविनो वा भावस्य हि कारणं तु यल्लोके। तद्द्रव्यं तत्त्वज्ञैः सचेतनाचेतनं कथितम् ॥ १ ॥' इह चावश्यकशब्देन प्रशस्तभावाधिष्ठिता देहादय एवोच्यंते, तद्विकलास्तु त एव द्रव्यावश्यकमिति, उक्तं च-"देहागमकिरियाओ दव्वावासं भणंति सव्वण्णू। भावाभावत्तणओ दव्वाजितं भावरहितं वा ॥ १ ॥' विवक्षया विवक्षितभावरहित एव देहो गृह्यते, भावो न सामान्यतो, भावशून्यत्वानुपपत्तेरलं प्रसङ्गेन, प्रकृतं प्रस्तुमः, द्रव्यावश्यकं द्विविधं प्रज्ञप्तं, तद्यथा-आगमतः-आगममाश्रित्य नोआगमतश्च, नोशब्दार्थं यथाऽवसरमेव वक्ष्यामः, चशब्दौ द्वयोरपि तुल्यपक्षतोद्भावनार्थौ। 'से किं त' मित्यादि, ( १३-१४ ) आगमतो द्रव्यावश्यकं 'जस्स ण' मित्यादि, यस्य कस्यचित् 'ण' मिति वाक्यालङ्कारे आवश्यकमित्येतत्पदं, इह चाधिकृत-

स्वनामवत् सम्यक्परिसूत्रं, शिक्षितं भवति, स तत्र वाचनादिभिर्वर्तमानोऽपि द्रव्यावश्यकमिति क्रिया, अत्र च 'सुपां लुगि' त्यादिना छंदसि
सप्तम्याः स्थाने प्रथमा भवति, तत्र शिक्षितमिदं नीतमधीतमित्यर्थः, स्थितमिति चेतसि स्थितं न प्रच्युतमितियावत्, जितमिति परिपाटी
इवैतं पुनरावर्त्तनीयमित्यर्थः, मितमिति वर्णादिभिः परिसंख्यातमिति हृदयं, परिजितमिति सर्वतो जितं परिजितं, परावर्त्तनां कुर्वतो यदुत्क्रमे-
णाप्यागच्छतीत्यभिप्रायः, नाम्ना समं नामसमं, नाम-अभिधानं, एतदुक्तं भवति-स्वनामवत् शिक्षितादिगुणोपेतमिति, घोषा-उदात्तादयः
वाचनाचार्याभिहितघोषैः समं घोषसमं, अक्षरन्यूनं हीनाक्षरं न हीनाक्षरमहीनाक्षरं, अधिकाक्षरं नाधिकाक्षरमनत्यक्षरमिति, विपर्य-
स्तरत्नमालागतरत्नानीव न व्याविद्धानि अक्षराणि यस्मिंस्तदव्याविद्धाक्षरं, उपलाकुलभूमिलाङ्गलवत्र स्खलितमस्खलितं, न मिलितममिलितं
नानाधान्यमेलकवत् न विपर्यस्तपदवाक्यग्रन्थमित्यर्थः, असंसक्तपदवाक्यविच्छेदं चेति, अनेकशास्त्रग्रन्थसंकरात् अस्थानछिन्नग्रन्थनाद्वा
न व्यत्याम्रेडितं कोलिकपायसवत् भेरीकंथावदेतदपव्यत्याम्रेडितं, अस्थानादिग्रन्थनेनं व्यत्यामेडितं यथा 'भ्रातराज्यस्य रामस्य राक्षसा
निधनं गतः' इत्यादि, प्रतिपूर्णं ग्रंथतोऽर्थतश्च, तत्र ग्रन्थतो मात्रादिभिर्यत्प्रतिनियतप्रमाणं छंदसा वा नियतमानमिति, अर्थतः परिपूर्णं नाम
न साकांक्षमव्याप्तं स्वतंत्रं चेति, उदात्तादिघोषाविकलं परिपूर्णघोषं, आह-घोषसममित्युक्तं ततोऽस्य को विशेषः? इति, उच्यते,
घोषसममिति शिक्षितमधिकृत्योक्तं प्रतिपूर्णघोषं तूच्चार्यमाणं गृह्यत इत्ययं विशेषः, कंठश्चौष्ठौ कंठोष्ठं प्राण्यङ्गत्वादेकवद्भावस्तेन विप्रमुक्तमिति
विस्पष्टः, नान्यक्तबालमूकभाषितवत्, वाचनया उपगतं गुरुवाचनया हेतुभूतयाऽऽप्तं, न कर्णाघाटकेन शिक्षितमित्यर्थः, पुस्तकाद्वा अधीतमिति,
स इति गम्यते: 'ण' मिति वाक्यालङ्कारे तत्राऽऽवश्यके वाचनया प्रतिप्रश्नेन परावर्त्तनेन धर्मकथया वर्त्तमानो द्रव्यावश्यकमिति वाक्यशेषः
नानुप्रेक्षया वर्त्तमानो द्रव्यावश्यकं, कस्मात्? 'अनुपयोगो द्रव्य' मिति कृत्वा, अनुप्रेक्षया तु तदभावः, तत्र ग्रन्थतो शिष्याऽध्यापनं वाचना

अनवगतार्थादी गुरुं प्रति प्रश्नः प्रतिप्रश्नः ग्रन्थस्य पुनः पुनरभ्यसनं परावर्त्तनं अहिंसालक्षणधर्म्मान्याख्यानं धर्मकथा ग्रंथार्थानुचिन्तनमनुप्रेक्षा, आह-आगमतोऽनुपयुक्तो द्रव्यावश्यकमित्येतावतैवाभिलषितार्थसिद्धेः शिक्षितादिश्रुतगुणोत्कीर्त्तनमनर्थकमिति, उच्यते, शिक्षितादिश्रुतगुणकीर्त्तनं कुर्वन्निदं ज्ञापयति यथेह सकलदोषविप्रमुक्तमपि श्रुतं निगदतो द्रव्यश्रुतं भवति, द्रव्यावश्यकं च, एवं सर्व एव ईर्यादिक्रियाविशेषः अनुपयुक्तस्य विफल इति, उपयुक्तस्य तु यथा स्खलितादिदोषदुष्टमपि निगदतो भावश्रुतमेवमीर्यादयोऽपि क्रियाविशेषाः कर्ममलापनायेति, एत्थ य अत्थायदंसणत्थं हीणक्खरंमि उदाहरणं-इह भरहंमि रायगिहं नगरं, तत्थ राया सेणिओ नाम होत्था, तस्स पुत्तो पयाणुसारी पउरिहयबुद्धिसंपन्नो अभओ णाम होत्था, अण्णया तेणं कालेणं तेणं समएणं समणे भगवं महावीरे इह भरहंमि विहरमाणे तंमि णगरे समोसरिसु, तत्थ य बहवे सुरसिद्धविज्जाहरा धम्मसवणनिमित्तं समागच्छिसु, तओ धम्मकहावसाणे णियणियभवणाणि गच्छंताणं एगस्स विज्जाहरस्स गहगामिणीए विज्जाए एक्कमक्खरं पम्हुट्ठमासी, तओ तं वियलविज्जं णियगभवणं गंतुमचाएन्तं मंडुक इवोप्पदणिवयमाणं सेणिए अदक्खु, तओ सो भगवंतं पुच्छिंसु, से य भगवं महावीरे अकहिंसु, तं च कहिज्जमाणं निसुणेत्ता सेणियपुत्ते अभए विज्जाहरं एवं वयासी-जइ ममं सामण्णसिद्धिं करेसि तओऽहं ते अक्खरं लंभामि पयाणुसारित्तणओ, से य काहिंसु, तओ से अभए तमक्खरं लभिंसु, लभित्ता य विज्जाहरस्स कहिंसु, तओ से य पुण्णविज्जो तीए विज्जाए अभयस्स साहणोवायं कहेत्ता णियगभवणं गमिसुत्ति, एस दिट्ठंतो, अयमत्थोवणओ-जहा तस्स विज्जाहरस्स हीणक्खरदोसेणं णहगमणमेव पम्हुट्ठमासी, तंमि य अहुंते विहला विज्जा, एवं हीनाक्षरेऽर्थभेदोऽर्थभेदात् क्रियाभेदस्तदभावे मोक्षाभावस्तदभावे च दीक्षावैयर्थ्यमिति अहियक्खरंमि उदाहरणं-पाडलिपुत्ते णयरे चंदगुत्तपुत्तस्स बिंदुसारस्स पुत्तो असोगो नाम राया, तस्स असोगस्स पुत्तो कुणालो नाम, उज्जेणी से कुमारभोत्तीए दिण्णा, सा सुट्ठु, अण्णता तस्स रण्णो निवेदितं-जहा कुमारो

रण्णा पासट्ठियाए तत्थ माइरेगट्ठयामो जाओत्ति, ताहे रण्णा सयमेव लेहो लिहिओ जहाऽधीयतु कुमारो, कुमारस्स य मादीसव्वक्कीए पन्नत्तो बिन्दू पाडिओ, रण्णा अवाइय मुद्दित्ता उज्जेणीं पेसिओ, वाइओ, वायगा पुच्छिया-किं लिहियं?, ते णेच्छंति कहिउं, ताहे कुमारेण सयमेव वाइओ, चिंतियं चऽणेणं-अम्हं मोरियवंसियाणं अपडिहया आणाओ, कहमहं अप्पणो पिउणो आणं भंजामि?, तओ अणेण तत्तसलागाए अच्छीणि अंजियाणि, ताहे रण्णा णायं, परिताविता उज्जेणी अण्णस्स कुमारस्स दिण्णा, तस्सवि कुमारस्स अण्णो गामो दिण्णो, अण्णया तस्स कुणालस्स अंधयस्स पुत्तो जाओ, णामं च से कयं संपती, सो अंधयो कुणालो गंधव्वे अतीवकुसलो, अण्णया य अण्णायो उज्जेणीए गायंतो हिंडइ, तत्थ रण्णो निवेदियं जहा एरिसो सो गंधव्वि जो अंधलओत्ति, तओ रण्णा भणियं-आणेहत्ति, ताहे आणिओ जवणियंतरिओ गायति, जाहे अतीव अक्खित्तो, ताहे भणति-किं ते देमि ?, तओ एत्थ कुणालेण गीतं- 'चंदगुत्तपवोत्तो उ, बिंदुसारस्स नत्तुओ। असोगसिरिणो पुत्तो, अंधो जायति कागिणिं ॥ १ ॥ ताहे रण्णा पुच्छितं-को एस तुमं?, तेण कहितं-तुज्झं चेव पुत्तो, ततो जवणियं अवसारेउं कंठे घेत्तुं अंसुपातो कओ, भणियं च-किं देमि ?, तेण भणियं-कागणिं मे देहि, रण्णा भणियं-किं कागिणिए व तुमं करिहिसि ? ण कागणिं जायसि, ततो अमच्चेहिं भणियं-सामि! रायपुत्ताणं रज्जं कागणि भण्णति, रण्णा भणियं-किं तुमं काहिसि रज्जेणं ?, कुणालेण भणियं-मम पुत्तो अत्थि संपतीणाम कुमारो, तओ से दिण्णं रज्जं, सो चेव उवणओ णवरमहियक्खरेणंति अभिलावो कायव्वो, अहवा भावाहिए लोइयं इमं अक्खाणयं-कामियसरस्स तीरे य वंजुलरुक्खो महतिमहालओ, तत्थ किर रुक्खे अवलग्गिउं जो सरे पडति सो जइ तिरिक्खजोणिओ सो मणुस्सो होति, अह मणुस्सो पडति ततो देवो होति, अहो पुणो बीयं वारं पडति तो पुण सोचेव य होइ, तत्थ वाणरो सपत्तिओ ओयरति पतिदिणं पाणितं पातुं, अण्णया पाणियपियणट्ठाए आगतो संतो वंजुलरुक्खाओ मणुस्सित्थिमिहु-

गं कामसरे पडिउं, ततो तं देवमिहुणगं जायं पेच्छति, तओ वाणरो सपत्तिओ संपहारेति जहा रुक्खे अवलग्गितुं सरे पडामो जा देव-
मेहुणगं भवामो, तओ पडिताणि, उरालं माणुसजुअलं जायं, सो भणइ-पडामो जाहे देवजुयलगं भवामो, इत्थी वारेती, को जाणति मा ण
होमो देवा, पुरिसो भणति-जइ ण होज्जामो किं माणुसत्तणंपि णस्सिहिति ?, तीए भणियं-को जाणइत्ति, ततो सो तीए वारिज्जमाणोऽवि
डिओ, पुणोवि वाणरो चेव जाओ, पच्छा सा रायपुरिसेहिं गहिया, रण्णो भज्जा जाया, इतरोऽवि मोयारएहिं गहिओ खड्डुओ सिक्खा-
तो, अण्णया य ते मोयारगा रण्णो पुरओ पेच्छं देंति, रायावि सह तीए देवीए पेच्छति, ताहे सो वाणरो देविं निज्झायंतो अहिलसति,
ओ तीए अणुकंपाए वाणरो भणिओ-'जो जहा वट्टए कालो, तं तहा सेव वाणरा ! । मा वंजुलपरिब्भट्ठो, वाणरा ! पडणं सर ॥ १ ॥
पनयः पूर्ववत्, भावहीणाधितभावेवि उदाहरणं, जहा काइ अगारी पुत्तस्स गिलाणस्स णेहेणं तित्तकडुभेसयाइं मा णं पीलेज्ज ऊणए देइ,
उणाति ण तेहिं, अहिएहिं मरति बालो, तहाहारे । साम्प्रतमिदमेव द्रव्यावश्यकं नयैर्निरूप्यते, ते च मूलनया नैगमादयस्तथा चोक्तम्-'णेगम
संगह ववहार उज्जुसुते चेव होइ बोधव्वो । सद्दे य समभिरूढे एवंभूते य मूलनया ॥ १ ॥' तओ 'णेगमस्से' त्यादि ( १४-१७ )
गमस्यैकोऽनुपयुक्तो देवदत्तः आगमतः एकं द्रव्यावश्यकं द्वावनुपयुक्तौ देवदत्तयज्ञदत्तौ आगमतो द्रव्यावश्यके त्रयः अनुपयुक्ता देवदत्तयज्ञ-
त्तसोमदत्ताः आगमतो द्रव्यावश्यकानि, किं बहुना ?, यावन्तोऽनुपयुक्ता देवदत्तादयस्तावन्त्येव तानि नैगमस्याऽऽगमतो द्रव्यावश्यकानि,
समतीतान्यनागतानि च प्रतिपद्यत इति, नैगमस्य सामान्यविशेषाभ्युपगमप्रधानत्वात्, विशेषाणां च विवक्षितत्वात्, आह-एवं सामान्य-
शेषाभ्युपगमरूपत्वात् अस्य सम्यग्दृष्टित्वप्रसङ्गः, न, परस्परतोऽत्यन्तनिरपेक्षत्वाभ्युपगमात्, उक्तं च-'दोहिवि णएहिं नीतं सत्थमुलूएण
हवि मिच्छत्तं । जं सविसयप्पहाणत्तणेण अण्णोण्णनिरवेक्खो ॥१॥' 'एवमेव ववहारस्सवि' एवमेव यथा नैगमस्य तथा व्यवहारस्यापि

एकः अनुपयुक्तो देवदत्तः आगमत एकं द्रव्यावश्यकमित्यादि, अस्य व्यवहारनिष्ठत्वात् व्यवहारस्य च विशेषायत्तत्वात् विशेषव्यतिरेकेण च सामान्यासिद्धेः, विशेषाभ्युपगमसाम्यादतिदेशेनैवाधिकृतनयमताभिधानलक्षणेष्टार्थसिद्धेर्लाघवार्थं नैगमनयमतोपन्यासानन्तरं व्यवहारनयमतोपन्यास इति।'संगहस्से'त्यादि, संग्रहस्यैको वाऽनेके वाऽनुपयुक्तो वा अनुपयुक्ता वा आगमतो द्रव्यावश्यकं वा द्रव्यावश्यकानि वा 'से एग' त्ति तदेकं द्रव्यावश्यकं, सामान्यापेक्षया, द्रव्यावश्यकसामान्यमात्रप्रतिपादनपरत्वादस्य, सामान्यव्यतिरेकेण विशेषासिद्धेः, 'उज्जुसुत्तस्से'-त्यादि, ऋजुसूत्रस्यैको वाऽनुपयुक्तो देवदत्तः आगमतश्च एकं द्रव्यावश्यकं, पृथक्त्वं नेच्छति, अयमत्र भावार्थः- वर्त्तमानकालभावि आत्मीयं चेच्छति, तस्यैवार्थक्रियासमर्थत्वात् स्वधनवत्, अतीतानागतपरकीयानि तु नेच्छति, अतीतानागतयोर्विनष्टानुपपन्नत्वात् परकीयस्य च स्वकार्याप्रसाधकत्वादिति । 'तिण्हं सद्दणयाण' मित्यादि, त्रयाणां शब्दनयानां शब्दसमभिरूढैवंभूतानां ज्ञः अनुपयुक्तः अवस्तु, अभाव इत्यर्थः, 'कस्मादि'ति कस्मात्कारणात्, यदि ज्ञः अनुपयुक्तो न भवति, कुत एतद् ?, उपयोगरूपत्वात् ज्ञानस्य, ततश्च ज्ञोऽनुपयुक्तश्चेत्यसंभव एव, 'सेत'मित्यादि, तदागमतो द्रव्यावश्यकं, आह-कोऽयमागमो नाम इति, उच्यते, ज्ञानं, कथमस्य द्रव्यत्वं, भावरूपत्वात् ज्ञानस्येति, सत्यमेतत्, किंत्वागमस्य कारणमात्मा देहः शब्दश्च, द्रव्यं च कारणमुक्तमतस्तत्कारणत्वादागम इति, कारणे कार्योपचारात् ।' से किं तं नोआगमतो इत्यादि (१५-१९) अथ किं तन्नोआगमतो द्रव्यावश्यकं ?, नोआगमतो इत्यत्र आगमसव्वनिसेहे नोसद्दो अहव देसपडिसेहे । सव्वे जह णसरीरं भव्वस्स य आगमाभावा ॥ १ ॥ किरियागमुच्चरंतो आवासं कुणति भावसुण्णोत्ति । किरियाऽऽगमो ण होई तस्स निसेहो भवे देसे ॥ २ ॥ नोआगमतो द्रव्यावश्यकं त्रिविधं प्रज्ञप्तं, तद्यथा—ज्ञशरीरद्रव्यावश्यकं भव्यशरीरद्रव्यावश्यकं ज्ञशरीरभव्यशरीरव्यतिरिक्तं च द्रव्यावश्यकं । 'से किं त' मित्यादि (१६-१९) प्रश्नसूत्रं, ज्ञातवानिति ज्ञः तस्य शरीरं उत्पादकालादारभ्य प्रतिक्षणं शीर्यत इति शरीरं

तदेवानुभूतभावत्वात् द्रव्यावश्यकं ज्ञशरीरद्रव्यावश्यकं । आवस्सएत्तिपदत्थाधिकारजाणगस्सेत्यादि, आवश्यकमिति यत्पदं भव्यशरीरद्रव्यावश्यकं, अस्यार्थ एवार्थाधिकारः तद्गता अर्थाधिकारा वा गृह्यन्ते तस्य तेषां वा ज्ञातुः यच्छरीरकं, संज्ञायां कन्, किंभूतं ?- व्यपगतच्युतच्यावितत्यक्तदेहं, व्यपगतम्-ओघतश्चेतनापर्यायादचेतनत्वं प्राप्तं च्युतं-देवादिभ्यो भ्रष्टं च्यावितं-तेभ्य एवायुःक्षयेण भ्रंशितं त्यक्तदेहं-जीवसंसर्गसमुत्थशक्तिजनिताहारादिपरिणामप्रभवपरित्यक्तोपचयं, तत्र व्यपगतं सर्वगताऽऽत्मनः प्राकृतमपि भवति तद्विच्छित्तये च्युतं, इदमपि स्वभावत एव कैश्चिदिष्यते तद्व्यपोहाय च्यावितं, इत्थं त्यक्तोपचयमिति चैतज्जीवशरीरयोर्विशिष्टसम्बन्धज्ञापनार्थमिति, उक्तं च वृद्धैः—' पज्जायंतरपत्तं खीरंव कमेण जह दधित्तेणं । तह चेतणपज्जायादचेयणत्तं ववगतंति ॥ १ ॥ चुतमिह ठाणब्भट्ठं देवोव्व जहा विमाणवासाओ । इय जीवितचेयणादिकिरियाभट्ठं चुतं भणिमो ॥ २ ॥ चइयंमि चावितं जं जह कप्पा संगमो सुरिंदेणं । तह चावियमिति जीवा पडिएणावक्खएणंति ॥ ३ ॥ आहारसत्तिजणिताऽऽहारसुपरिणामजोवचयसुण्णं । भण्णइ हु चत्तदेहं देहोवरओत्ति एगट्ठा ॥ ४ ॥ ' एवमुक्तेन विधिना जीवेन-आत्मना विविधमनेकधा प्रकर्षेण मुक्तं जीवविप्रमुक्तं, तथा चान्यैरप्युक्तं-' बंधणछेदत्तणओ आउक्खयउव्व जीवविप्पजढं । विजढंति पगारेणं जीवणभावट्ठितो जीवो ॥ १ ॥ ' ततश्चेदं व्यपगतादिविशेषणकलापयुक्तं यावज्जीवविप्रमुक्तं ज्ञशरीरद्रव्यावश्यकमिति गम्यते, कथं ?, यस्मादिदं शय्यागतं वा संस्तारगतं वा सिद्धशिलातलगतं वा दृष्ट्वा कश्चिदाह-अहो ! अनेन शरीरसमुच्छ्रयेण जिनदृष्टेन भावेन आवश्यकमित्येतत्पदमाख्यातमित्यादि, तस्मादतीतकालनयानुवृत्त्याऽतीतां वृत्तिमपेक्ष्य द्रव्यावश्यकमित्युच्यत इति क्रिया, यथा को दृष्टान्त इति ?, प्रश्ननिर्वचनमाह-अयं मधुकुम्भ आसीदयं घृतकुम्भ आसीदित्यादि अक्षरगमनिका, भावार्थ उच्यते-तत्र शय्यासंस्तारकौ प्रतीतौ, सिद्धशिलातलं तु यत्र शिलातले साधवस्तपःपरिकर्म्मितशरीराः स्वयमेव गत्वा भक्तपरिज्ञाअनशनं प्रतिपन्नपूर्वाः प्रतिपद्यन्ते प्रतिपत्स्यन्ते

चेति, क्षेत्रगुणतश्च तत्र यथाभद्रिकदेवतागुणादाराधना सिद्धिमासादयतीति, अन्ये तु व्याचक्षते-यस्मिन् शिलातले सिद्धः कश्चिदित्ति, गतं स्थितमित्यनर्थान्तरं, अहो दैन्यविस्मयामंत्रणेषु त्रिष्वपि युज्यते, तत्रानित्यं शरीरमिति दैन्ये, आवश्यकं ज्ञातमिति विस्मये, अन्यं पार्श्वस्थमामंत्रयत आमंत्रणमिति, अनेन प्रत्यक्षेण उत्पत्तिकालादारभ्य प्रतिसमयं शीर्यत इति शरीरं तदेव पुद्गलसंघातनरूपत्वात् समुच्छ्रयस्तेन जिनदृष्टेन भावेन भूतपूर्वगत्या जीवितशरीरयोः कथञ्चिदभेदात् आवश्यकमित्येतत्पदमाख्यातं सामान्यविशेषरूपेण, अन्ये तु व्याचक्षते-'आघवियं' ति प्राकृतशैल्या छान्दसत्वाच्च गुरोः सकाशादागृहीतं, प्रज्ञापितं सामान्यतो विनेयेभ्यः, प्ररूपितं प्रतिसूत्रमर्थकथनेन, दर्शितं प्रत्युपेक्षणादिदर्शनेन, इयं क्रिया धीरैरुपात्ता इत्थं च क्रियत इति भावना, निदर्शितं कथञ्चिदगृह्णतः परयाऽनुकम्पया निश्चयेन पुनः पुनर्दर्शितं, उपदर्शितं सकलनययुक्तिभिः, अन्ये त्वन्यथापि व्याचक्षते, तदलं तदुपन्यासलक्षणेन प्रयासेनेति, अतः द्रव्यावश्यकमभिधीयते, आह-आगमक्रियातीतमचेतनमिदं कथं द्रव्यावश्यकमभिधीयते ?, अत्रोच्यते, अतीतकालनयानुवृत्त्या, यथा को दृष्टान्तः ?, तत्र दृष्टमर्थमन्तं नयतीति दृष्टान्तः, लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्त इत्यन्ये, अयं मधुकुम्भ आसीदित्यादि, अतीतमधुघृतघटवदिति भावना।'से त' मित्यादि निगमनं। 'से किं त'-मित्यादि ( १७-२१ ) भव्यो योग्यो दलं पात्रमिति पर्यायाः, तस्य शरीरं तदेव भाविभावाऽऽवश्यककारणत्वात् द्रव्यावश्यकं भव्यशरीरद्रव्यावश्यकं, 'जो जीवो' त्यादि, यो जीवो योन्या-अवाच्यदेशलक्षणया जन्मत्वेन सकलनिर्वृत्तिलक्षणेन, अनेनामगर्भव्यवच्छेदमाह, निष्क्रान्तो-निर्गतोऽनेनैव शरीरसमुच्छ्रयेणेति पूर्ववत्, आदत्तेन-गृहीतेन, अन्ये त्वभिदधति-'अत्तएणं' ति आत्मीयेन, जिनदृष्टेन भावेनेत्यादि पूर्ववत्, अथवा तदावरणक्षयोपशमलक्षणेन 'सेयकाले' त्ति छान्दसत्वादागामिनि काले शिक्षिष्यते, न तावच्छिक्षते, तदेतद्भाविनीं वृत्तिमङ्गीकृत्य भव्यशरीरद्रव्यावश्यकमित्युच्यते, यथा को दृष्टान्त इत्यादि भावितार्थं यावत् 'से त' मित्यादि। 'से किं त' मित्यादि ( १८-२२ ) ज्ञशरीर-

भव्यशरीराभ्यां व्यतिरिक्तं द्रव्यावश्यकमिति निरूपितशब्दार्थमेव त्रिविधं प्रज्ञप्तं, तद्यथा-लौकिकं कुप्रावचनिकं लोकोत्तरं, 'से किं त' मित्यादि (१९-२२) एते राजेश्वरादयः मुखधावनादि कृत्वा ततः पश्चाद्राजकुलादौ गच्छंति तदेतल्लौकिकं द्रव्यावश्यकमिति क्रिया, तत्र राजा-चक्रवर्त्यादिर्महामाण्डलिकान्तः ईश्वरो-युवराजा माण्डलिकोऽमात्यश्च, अन्ये तु व्याचक्षते-अणिमाद्यष्टविधैश्वर्ययुक्त ईश्वर इति, तलवरः-परितुष्टनरपतिप्रदत्तपट्टबंधभूषितः माडम्बिकः-छिन्नमंडलाधिपः कौटुम्बिकः-कतिपयकुटुम्बप्रभुः इभ्यः-अर्थवान्, स च किल यस्य पुञ्जीकृतरत्नराश्यन्तरितो हस्त्यपि नोपलभ्यत इत्येतावताऽर्थेनेति, श्रीदेवताध्यासितसौवर्णपट्टभूषितोत्तमाङ्गः पुरज्येष्ठो वणिक्, सेनापतिः- नरपतिनिरूपितोऽष्ट्र-हस्त्यश्वरथपदातिसमुदायलक्षणायाः सेनायाः प्रभुरित्यर्थः, सार्थनायकः- 'गणिमं धरिमं मेज्जं पारिच्छेज्जं च दव्वजायं तु। घेत्तूणं लाभट्ठी वच्चइ जो अण्णदेसं तु ॥ १ ॥ निवबहुमओ पसिद्धो दीणाणाहाण वच्छलो पंथे। सो सत्थवाहनामं धणोव्व लोए समुव्वहति ॥ २ ॥ प्रभृतिग्रहणेन प्राकृतजनपरिग्रहः, 'कल्लं पादुप्पभाताए' इत्यादि, कल्लमिति श्वः प्रज्ञापकापेक्षमेतत्, यतः प्रज्ञापको द्वितीयायामेव प्रज्ञापयति, प्रादुः प्रकाशन इत्यर्थे धातुः, ततश्च प्रकाशप्रभातायां रजन्यां सुविमलायामित्यादिनोत्तरोत्तरकालभाविना विशेषणकलापेनाऽत्यंतोद्यमवतां मानवानां तमावश्यककालमाह, 'फुल्लोत्पलकमलकोमलोन्मीलिते' इहोत्पलं पद्ममुच्यते कमलस्त्वारण्यः पशुविशेषः ततश्च फुल्लोत्पलकमलयोः-विकसितपद्मकमलयोः कोमलं—अकठोरं उन्मीलितं यस्मिन्निति समासः, अनेनारुणोदयावस्थामाह, 'अहापंडुरे पहाए' अथ आनन्तर्ये, तथा 'रत्तासोगे' त्यादि, रक्ताशोकप्रकाशकिंशुकशुकमुखगुंजार्द्धरागसदृशे, आरक्त इत्यर्थः, तथा 'कमलाकरनलिनीखण्डबोधके' कमलाकरो-ह्रदादिजलाश्रयस्तस्मिन्नलिनीखण्डं तद्बोधक इत्यनेन स्थलनलिनव्यवच्छेदमाह, यद्वा कमलाकरनलिनीखण्डयोर्भेदेनैव ग्रहणं, 'उत्थिते' उद्गते सूर्ये सहस्ररश्मौ-सहस्रकिरणे दिनकरे-आदित्ये तेजसा ज्वलति सति, विशेषणबहुत्वं महत्त्वाशयशुद्ध्यर्थं कर्त्तव्यमितिख्यापनार्थं,

यत्रैते सर्वे एव विशेषाः सन्ति तस्मिन्नुदिते, अज्ञातज्ञापनार्थं वा विशेषकलाप इति, 'मुहघोवणे' त्यादि, निगमनान्तं प्रायो निगदसिद्धमेव, नवरं पुष्पमाल्ययोरयं विशेषः-अग्रथितानि पुष्पाणि ग्रथितं माल्यं, विकाशितानि वा पुष्पाण्यविकाशितानि माल्यं, आरामोद्यानयोरप्ययं विशेषः-विविधपुष्पजात्युपशोभितः आरामः चम्पकवनाद्युपशोभितमुद्यानं। 'से किं त' मित्यादि (२०-२४) यदेते चरकादयः इडाज्यादेरुपलेपनादि कुर्वन्ति तदेतत्कुप्रावचनिकं द्रव्यावश्यकमिति क्रिया, तत्र चरकाः-धाटिभिक्षाचराः चीरिका-रथ्यापतितचीरपरिधानाश्चीरोपकरणा इत्यन्ये, चर्मखण्डिकाः-चर्मपरिधानाश्चर्मोपकरणा इति चान्ये, भिक्षोण्डाः- भिक्षाभोजिनः सुगतशासनस्था इत्यन्ये, पाण्डुरङ्गाः- भौताः गौतमाः-लघुतराक्षमालाचर्चितविचित्रपादपतनादिशिक्षाकलापवद्वृषभकोपायतः कणभिक्षाग्राहिणः, गोवृत्तिकाः-गोश्चर्यानुकारिणः, उक्तं च-'गावीहिं समं निग्गमपवेसठाणासणाइ य करेंति। भुंजंति य जह गावी तिरिक्खवासं विभावेन्ता ॥ १ ॥ गृहधर्माः- गृहस्थ एव श्रेयानित्यभिसंधाय तद्यथोक्तकारिणः धर्मसंहितापरिज्ञानवंतः सभासदः, अविरुद्धाः- वैनयिका, उक्तं च- 'अविरुद्धविणयकारी देवादीणं पराए भत्तीए। जह वेसियायणसुओ एवं अण्णेवि नायव्वा ॥ १ ॥ विरुद्धा—अक्रियावादिनः, परलोकानभ्युपगमात्सर्ववादिभ्य एव विरुद्धा इति, वृद्धाः-तापसाः प्रथमसमुत्पन्नत्वात् प्रायो वृद्धकाल एव दीक्षाप्रतिपत्तेः श्रावका धिग्वर्णाः, अन्ये तु वृद्धश्रावका इति व्याचक्षते।धिग्वर्णा एव, प्रभृतिग्रहणात् परिव्राजकादिपरिग्रहः, पाखण्डस्थाः 'कल्ल' मित्यादि पूर्ववत् 'इंदं सिवे'त्यादि, इन्द्रः प्रतीतः स्कन्दः- कार्तिकेयः रुद्रः-प्रतीतः शिवो-महादेवः वैश्रवणो-यक्षनायकः देवः-सामान्यः नागो-भवनवासिभेदः यक्षो-व्यन्तरः भूतः-स एव मुकुन्दो-बलदेवः आर्या-प्रशान्तरूपा दुर्गा कोट्टक्रिया-सैव महिषाद्यारूढा, उपलेपसम्मार्जनावर्षणधूपपुष्पगन्धमाल्यादीनि द्रव्यावश्यकानि कुर्वन्ति, तत्रोपलेपनं—छगणादिना प्रतीतमेव सम्मार्जनं दण्डपुच्छादिना आवर्षणं गन्धोदकादिनेति 'से-त' मित्यादि। 'जे इमे' त्ति (२१-२६) ये एते ' समणगुणमुक्कजोगित्ति ' श्रमणाः-साधवस्तेषां गुणाः-

मूलोत्तराख्याः प्राणातिपातादिविनिवृत्त्यादयः पिण्डविशुद्ध्यादयश्च, योजनं योगः आसेवनमित्यर्थः श्रमणगुणेषु मुक्तो योगो यैस्ते तथाविधाः, शेषाः अवयवाः यावत् घट्ठत्ति अवयवावयविनोरभेदोपचारात् जङ्घे फेनकादिना घृष्टे येषां ते घृष्टाः, तथा 'मट्ठा' तैलोदकादिना मृष्टाः मतुप्लोपाद्वा मृष्टवंतो मृष्टाः 'तुप्पोट्ठ' त्ति तुप्रं—स्निग्धं तुप्रा ओष्ठाः समदना वा येषां ते तुप्रौष्ठाः, शेषं कण्ठ्यं, यावदुभयकालमावश्यकस्येत्येवावश्यकाय, छट्ठीविभत्तीइ भण्णइ चउत्थीति लक्षणात्, प्रतिक्रमणायोपतिष्ठन्ते तदेतत् द्रव्यावश्यकं, भावशून्यत्वादभिप्रेतफलाभावाच्च, एत्थ उदाहरणं—'वसंतउरं नगरं, तत्थ गच्छो अगीयत्थसंविग्गो भविय विहरति, तत्थ य एगो संविग्गो समणगुणमुक्कजोगी, सो दिवसदेवसियं उदउल्लादियाओ अणेसणाओ पडिगाहेत्ता महता संवेगेण पडिक्कमणकाले आलोएति, तस्स पुण सो गच्छगणी अगीयत्थत्तणओ पायच्छित्तं देंतो भणति-अहो इमो धम्मसड्ढिओ साहू, सुहं पडिसेवितुं दुक्खं आलोएउं, एवं नाम एसो आलोएति अगूहंतो असढत्तओ सुद्धोत्ति, एवं च दट्ठूणं अण्णे अगीयत्थसमणा पसंसंति, चिंतेति य-णवरं आलोएयव्वंति, णत्थि किंचि पडिसेवितेणंति, तत्थ अण्णया कयादी गीयत्थो संविग्गो विहरमाणो आगओ, सो दिवसदेवसियं आविहिं दट्ठूणं उदाहरणं दाएति—गिरिणगरे वाणियओ रत्तरयणाणं घरं भरेऊण वरिसे २ संपलीवेइ, एवं च दट्ठूणं सव्वलोगो अविवेगत्तओ पसंसंति-अहो! इमो धण्णो जो भगवंतं अग्गिं तप्पेति, तत्थऽण्णया पलीवियं गिहं वाओ य पबलो जाओ सव्वं नगरं दड्ढं, ततो सो पच्छा रण्णा पडिहओ, णिण्णारो य कओ, अण्णहिं णगरे एवं चेव करेइ, सो राइणा सुतो जहा कोवि वाणिओ एवं करेइत्ति, सो तेण सव्वस्सहरणो काऊण विसज्जिओ, अडवीए किं न पलीवेसि?, तो जहा तेण वाणिएण अवसेसावि दड्ढा एवं तुमंपि एवं पसंसंतो एते साहुणो

सव्वेवि परिचयासि, ताहे जाहे सो न ठाइ ताहे तेण साहुणो भणिता-एस महानिद्धम्मो अगीयत्थो, ता अलं एयस्स आणाए, जइ एयस्स णिग्गहो ण कीरइ तओ अण्णेवि विणस्संतित्ति । 'सेत' मित्यादि निगमनत्रयं निगदसिद्धं । 'से किं त' मित्यादि ( २२-२८ ) अवश्याक्रियानुष्ठानादावश्यकं गुणानां च आवश्यमात्मानं करोत्यावश्यकं, उपयोगाद्यात्मकत्वाद्भावश्चासावावश्यकं चेति समासः, भावप्रधानं वाऽऽवश्यकं भावावश्यकं, भावावश्यकं द्विविधं प्रज्ञप्तं, तद्यथा— आगमतो नोआगमतश्च, 'से किं त' मित्यादि, ( २३-२८ ) ज्ञ उपयुक्तः, अयमत्र भावार्थः- आवश्यकपदार्थज्ञस्तज्जनितसंवेगेन विशुद्ध्यमानपरिणामस्तत्रैवोपयुक्तस्तदुपयोगानन्यत्वादागमतो भावावश्यकमिति, तथा चाह— 'सेत'— मित्यादि निगमनं । 'से किं त' मित्यादि, ( २४-२८ ) नोआगमतो भावावश्यकं ज्ञानक्रियोभयपरिणामो, मिश्रवचनत्वान्नोशब्दस्य, त्रिविधं प्रज्ञप्तं, तद्यथा-लौकिकमित्यादि, 'से किं त' मित्यादि ( २५-२८ ) पूर्वाह्ने भारतमपराह्ने रामायणं, तद्वचनश्रोतॄणां पत्रकपरावर्त्तनसंयवगात्रादिक्रियायोगे सति तदुपयोगभावतो ज्ञानक्रियोभयपरिणामसद्भावादित्याभिप्रायः, 'से त' मित्यादि निगमनं, 'से किं त' मित्यादि ( २६-२९ ) गतार्थं यावदिज्जंजलीत्यादि, इज्जंजलिहोमजपाणुरुक्खनमस्कारादीनि श्रद्धानुभावयुक्तत्वात्, भावावश्यकानि कुर्वंति, तत्र इज्ज्याञ्जलिर्यागांजलिरुच्यते, स च यागदेवताविषयः मातुर्वाञ्जलिरिज्जाञ्जलिर्मातृनमस्कारविधायीतिभावः होमाग्निः—हवनक्रिया जपोमंत्रादिन्यासः उडुरुक्खं(क्कं) ति देशीवचनं वृषभगर्जितकरणाद्यर्थ इति, अन्ये तु व्याचक्षते-उंदुं-मुखं तेण रुक्खं(क्कं)ति-सद्दकरणं तंपि वसभढेकियादि चेव घेप्पति, नमस्कारः प्रतीतो, यथा- नमो भगवते दिवसनाथाय, आदिशब्दात् स्तवादिपरिग्रहः, 'से त' मित्यादि, निगमनं, 'से किं त' मित्यादि, ( २७-३० ) यदित्यावश्यकमभिसंबद्ध्यते, श्रमणो वेत्यादि सुगमं, यावत्तच्चित्तेत्यादि, सामान्यतस्तास्मिन् आवश्यके चित्तं-भावमनोऽस्येति तच्चित्तः, तथा तन्मनो द्रव्यमनः प्रतीत्य विशेषोपयोगं वा, तथा तल्लेश्यः- तत्स्थशुभपरिणामविशेष इति भावना,

उक्तं च– 'कृष्णादिद्रव्यसाचिव्यात्परिणामो य आत्मनः । स्फटिकस्येव तत्रायं, लेश्याशब्दः प्रयुज्यते ॥ १ ॥ तथा 'तदध्यवसितः' इहाध्यवसायोऽध्यवसितं-तच्चित्तादिभावयुक्तस्य सतः तस्मिन्नावश्यक एवाध्यवसितं क्रियासंपादनविषयमस्येति तदध्यवसितः, तथा तत्तीव्राध्यवसायः इह प्रारम्भकालादारभ्य संतानक्रियाप्रवृत्तस्य तस्मिन्नेव तीव्रमध्यवसायं प्रयत्नविशेषलक्षणमस्येति समासः, तथा तदर्थोपयुक्तः– तस्यार्थस्तदर्थस्तस्मिन्नुपयुक्तः, प्रशस्ततरसंवेगविशुध्यमानस्याऽऽवश्यक एव प्रतिसूत्रं प्रत्यर्थं प्रतिक्रियं चोपयुक्त इति भावार्थः, तथा तदर्पितकरणः इह उपकरणानि-रजोहरणमुखवस्त्रिकादीनि तस्मिन्नावश्यके यथोचितव्यापारनियोगेनार्पितानि--न्यस्तानि करणानि येन स तथाविधः, द्रव्यतः सम्यक् स्वस्थानन्यस्तोपकरण इत्यर्थः, तथा तद्भावनाभावितः, असकृदनुष्ठानात्पूर्वभावनाऽपरिच्छेदत एव, पुनः २ प्रतिपत्तेरिति हृदयं, असकृदनुष्ठानेऽपि प्रतिपत्तिसमयभावनाअविच्छेदादिति, उपसंहरन्नाह- अन्यत्र-प्रस्तुतव्यतिरेकेण कुत्रचित्कार्यान्तरे मनः अकुर्वन्, मनोग्रहणं कायवागुपलक्षणं, अन्यत्र कुत्रचिन्मनोवाक्कायानकुर्वन्नित्यर्थः, उभयकालं--उभयसन्ध्यमावश्यकं-प्राग्निरूपितशब्दार्थं करोति-निर्वर्त्तयति [redacted] खल्वावश्यकपरिणामानन्यत्वादावश्यकमिति क्रिया, 'सेत' मित्यादि निगमनं, उक्तं भावावश्यकं ॥ अस्यैवेदानीमसंमोहार्थं पर्यायनामानि प्रतिपादयन्नाह 'तस्स णं इमे' इत्यादि (२८-३०) तस्यावश्यकस्य 'ण' मिति वाक्यालङ्कारे अमूनि वक्ष्यमाणानि एकार्थिकानि- तत्त्वत एकार्थविषयाणि नानाघोषाणि—नानाव्यञ्जनानि नामधेयानि भवन्ति, इह घोषा उदात्तादयः कादीनि व्यञ्जनानि । तद्यथा-- 'आवस्सगं' गाहा (*२-३०) व्याख्या-अवश्यक्रियाऽनुष्ठानादावश्यकं, गुणानां वा वश्यमात्मानं करोतीत्यावश्यकं, अवश्यकरणीयमिति मोक्षार्थिना नियमानुष्ठेयमिति, ध्रुवनिग्रह इत्यत्रानादित्वात्प्रायोऽनंतत्वाच्च ध्रुवं- कर्म्म तत्फलभूतो वा भावस्तस्य निग्रहो ध्रुवनिग्रहः, निग्रहहेतुत्वान्निग्रहः, तथा कर्म्ममलिनस्याऽऽत्मनो विशुद्धिहेतुत्वाद्विशुद्धिः, अध्ययनषट्कवर्गः– सामायिकादिषडध्ययनसमुदायः

सम्यग् जीवकर्मसंबंधव्यवहारापनयनान्न्यायः मोक्षाराधनानिबन्धनत्वादाराधना मार्गः—पन्थाः शिवस्येति गाथार्थः- । 'समणेण' गाहा (३३-३१) निगदसिद्धैव, नवरं अन्त इति मध्ये, 'सेत' मित्यादि निगमनं ॥ 'से किं त' मित्यादि (२९-३१) श्रुतं प्रागुनिरूपितशब्दार्थमेव, चतुर्विधं प्रज्ञप्तमित्याद्यावश्यकविवरणानुसारतो भावनीयं, यावत् 'पत्तयपोत्थयलिहियं (३७-३४) इह पत्रकाणि तलताल्यादिसंबन्धीनि तत्संघातनिष्पन्नास्तु पुस्तकाः, वस्त्रानिष्फण्णे इत्यन्ये, इयमत्र भावना- पत्रकपुस्तकलिखितमपि भावश्रुतनिबन्धनत्वात् द्रव्यश्रुतमिति । साम्प्रतं प्राकृतशैल्या तुल्यशब्दाभिधेयत्वात् ज्ञशरीरभव्यशरीरव्यतिरिक्तद्रव्यश्रुताधिकार एव निर्दोषत्वादिख्यापनप्रसंगोपयोगितया सूत्रनिरूपणायाह-' अह वे त्यादि ' अथवेति प्रकारान्तरप्रदर्शनार्थः सूत्रं पञ्चविधं प्रज्ञप्तं, तद्यथा- 'अंडज ' मित्यादि ' से किं त ' मित्यादि अंडाज्जातमण्डजं हंसगर्भादि, कारणे कार्योपचारात्, हंसः किल पतङ्गः तस्य गर्भः २ कोशिकारकः, आदिशब्दः स्वभेदप्रकाशकः कोशिकारप्रभवं चटकसूत्रमित्यर्थः, पञ्चेन्द्रियहंसगर्भजमित्यादि केचित्, ' से त ' मित्यादि निगमनं, एवं शेषेष्वपि प्रश्ननिगमने वाच्ये, पोण्डात् जातं पोण्डजं फलिहमादिवृत्ति-कर्पासफलादि कारणे कार्योपचारादेवेति भावना, कीटाज्जातं कीटजं पञ्चविधं प्रज्ञप्तं, तद्यथा- ' पट्टे '-इत्यादि, पट्टित्ति-पट्टसूत्रं मलयं-अंशुकं चीनांशुकं-कृमिरागादि, अत्र वृद्धा व्याचक्षते- किल जंमि विसए पट्टो उप्पज्जति तत्थ अरण्णे वणणिगुंजट्ठाणे मंसं चीणं वा आमिसं पुञ्जपुंजेहिं ठविज्जइ, ततो तेसिं पुंजाण पासओ णिप्पुण्णया अंतरा बहवे खीलिया भूमिए उद्धा निहोडिज्जंति, तत्थ वणंतराओ पयंगकीडा आगच्छंति, ते मंसचीणादियमामिसं चरंत इतो ततो य कीलंतरेसु संचरंता लाला मुयंति, एस पट्टोत्ति, एस य मलयवज्जेसु भणितो, एवं चेव मलयविसउप्पण्णो मलएत्ति भण्णइ, एवं चेव चीणाविसयबहिरुप्पण्णे अंसुए, चीणाविस-... कीडविसेसो कीडविसेसतो य पट्टसुत्तविसेसतो भवति, एवं मणुयादिरुहिरं घेत्तुं केणावि जोएण जुत्तं

मायणत्थं ठविज्जति, तो तत्थ किमी उप्पज्जंति, ते वायाभिलासिणो छिद्देण णिग्गता इतो ततो आसन्नं भमंति, तेसिं णीहारलाला किमिराग-सुत्तं भण्णइ, तं सपरिणामरंगरंगियं चेव भवइ, अन्ने भणंति-जाहे रुहिरुप्पन्ना किमिते तत्थेव मालिता कसवट्टं उत्तारित्ता तत्थ रसेहिं जोगं पक्खिवित्ता पट्टसुत्तं रयंति तं किमिरागं भण्णइ, अण्णुग्गाली, वालयं पंचविधं 'उण्णिय' मित्यादि उण्णादिया पसिद्धा, मिएहिंतो लहुतरा मृगाकृतयः वृहत्पिच्छाः तेसि लोमा मियलोमा, कुतवो उंदररोमेसु, एतेसिं चेव उण्णियादीणं उवहारो किट्टिसं, अहवा एतेसिं दुगादि-संजोगेण किट्टिसं, अहवा जे अण्णे सणमादिया रोमा ते सव्वे किट्टिसं भण्णंति, 'से तं वालज' मिति निगमनं। 'से किं तं वागज' मित्यादि, सनिगमनं निगदासिद्धमेवेति, 'से किं त' मित्यादि, ( ३८-३५ ) इदमप्यावश्यकविवरणानुसारतो भावनीयं, प्रायस्तुल्यवक्तव्यत्वात्, नवर-मागमतो भावश्रुतं तज्ज्ञस्तदुपयुक्तस्तदुपयोगानन्यत्वात्, नोआगमतस्तु लौकिकादि, अत्राह-नोआगमतो भावश्रुतमेव न युज्यते, तथाहि-यदि नोशब्दः प्रतिषेधवचनः कथमागमः?, अथ न प्रतिषेधवचनः कथं तर्हि नोआगमत इति, अत्रोच्यते, नोशब्दस्य देशप्रतिषेधवचनत्वात् चरण-गुणसमन्वितश्रुतस्य विवक्षितत्वात् चरणस्य च नोआगमत्वादिति। 'जं इमं अरहंतेही' ( ४२-३७ ) त्यादि, नन्दीविशेषविवरणा-नुसारतोऽन्यथा वोपन्यस्तविशेषणकलापयुक्तमपि स्वबुद्ध्या नेयमिति, शेषं प्रकटार्थं यावन्निगमनमिति। 'तस्स णं इमे' इत्यादि पूर्ववत् 'सुतसुत्त' गाहा ( *४-३८ ) व्याख्या-श्रूयत इति श्रुतं, सूचनात्सूत्रं, विप्रकीर्णार्थग्रन्थनाद् ग्रंथः, सिद्धमर्थमन्तं नयतीति सिद्धान्तः, मिथ्यादर्शनाविरतिप्रमादकषाययोगप्रवृत्तजीवशासनात् शासनं, पाठांतरं वा प्रवचनं, तत्रापि प्रगतं प्रशस्तं प्रधानमादौ वा वचनं प्रवचनं, मोक्षायाज्ञप्यन्ते प्राणिनोऽनयेत्याज्ञा, उक्तिर्वचनं वाग्योग इत्यर्थः, हितोपदेशरूपत्वादुपदेशनमुपदेशः, यथावस्थितजीवादिपदार्थ-प्रज्ञापनात् प्रज्ञापनेति, आचार्यपारम्पर्येणागच्छतीत्यागमः, आप्तवचनं आगम इति, एकार्थपर्यायाः सूत्र इति गाथार्थः। 'से त' मित्यादि

निगमनं। ' से किं त ' मित्यादि ( ४४-३८ ) वस्तुतो भावितार्थमेव, यावज्ज्ञशरीरभव्यशरीरव्यतिरिक्तस्त्रिविधः प्रज्ञप्तस्तद्यथा, ' सचित्ते-' त्यादि प्रश्नसूत्रं ( ४७-३९ ) चित्तं मनोऽर्थविज्ञानमिति पर्यायाः सह चित्तेन वर्त्तत इति सचित्तः सचित्तश्चासौ द्रव्यस्कन्धश्चेति समासः, इह विशिष्टैकपरिणामपरिणतः आत्मप्रदेशपरमाण्वादिसमूहः स्कन्धः अनेकविधः--अनेकप्रकारः व्यक्तिभेदेन प्रज्ञप्तः--प्ररूपितः, तद्यथा- ' हयस्कन्ध ' इत्यादि, हयः-अश्वः स एव विशिष्टैकपरिणामपरिणतत्वात्स्कन्धो हयस्कन्धः, एवं शेषेष्वपि भावनीयं, इह च सचित्त-द्रव्यस्कन्धाधिकारादात्मन एव परमार्थतश्चेनन्त्वादसङ्ख्येयप्रदेशात्मकत्वाच्च कथञ्चिच्छरीरभेदे सत्यपि हयादीनां हयादिजीवा एव गृह्यन्ते इति सम्प्रदायः, प्रभूतोदाहरणाभिधानं तु विजातीयानेकस्कन्धाभिधानेनैकपरमपुरुषस्कन्धप्रतिपादनपरदुर्नयनिरासार्थं, तथा चाहुरेके- " एक एव हि भूतात्मा, भूते भूते व्यवस्थितः । एकधा बहुधा चैव, दृश्यते जलचन्द्रवत् ॥ १ ॥ " एवं हि गुरुशिष्याद्यभाव-प्रसङ्गात् व्यवहारानुपपत्तिरिति । ' सेत ' मित्यादि निगमनं । ' से किं त ' मित्यादि, ( ४८-४० ) अविद्यमानचित्तः अचित्तः अचित्तश्चा-सौ द्रव्यस्कन्धश्चेति समासः, अनेकविधः प्रज्ञप्त इति पूर्ववत् , तद्यथा—द्विप्रदेशिक इत्यादि आनिगमनं सूत्रसिद्धमिति, ' से किं त ' मित्यादि ( ४९-४० ) मिश्रः-सचित्ताचित्तसंकीर्णः ततो मिश्रश्चासौ द्रव्यस्कन्धश्चेति समासः, सेनाया—हस्त्यश्वरथपदातिसन्नाहखड्गकुन्तादि-समुदायलक्षणाया अग्गस्कन्धं अग्रानीकमित्यर्थः, तथा मध्यमः पश्चिमश्चेति, ' सेत ' मित्यादि निगमनं, ' अहवे ' त्यादि (५०-४०) सुगमं यावत् से किं तं कसिणक्खंधे ( ५१-४० ) कृत्स्नः-संपूर्णः कृत्स्नश्चासौ स्कन्धश्चेति विग्रहः ' सचेव ' इत्यादि, स एव हयस्कन्ध इत्यादि, आह-यद्येवं ततः किमर्थं भेदेनोपन्यास इति, उच्यते, प्राक् सचित्तद्रव्यस्कन्धाधिकारात् तथाऽसम्भविनोऽपि बुद्ध्या निकृष्य जीवा एवोक्ताः इह तु जीवप्रयोगपरिणामितशरीरसमुदायलक्षणः समग्र एव कृत्स्नः स्कन्ध इति, अन्ये तु जीवस्यैव कृत्स्नस्कन्धत्वाद् व्यत्ययेन व्याचक्षते,

तथाऽप्यविरोधः, ' सेत ' मित्यादि निगमनं । ' से किं त ' मित्यादि (५२-४१) न कृत्स्नः अकृत्स्नः अकृत्स्नश्चासौ स्कन्धश्च अकृत्स्नस्कन्धः 'से चेवे' त्यादि, स एव द्विप्रदेशादिः, अयमत्र भावार्थः- द्विप्रदेशिकः त्रिप्रदेशिकमपेक्ष्याकृत्स्नो वर्तते इत्येवमन्येष्वपि वक्तव्यं, न यावत् कात्स्न्यमापद्यत इति, यद्येवं ह्यादिकृत्स्नस्कन्धस्यापि तदन्यमहत्तरस्कन्धापेक्षया अकृत्स्नस्कन्धत्वप्रसङ्गो, न, असंख्येयजीवप्रदेशान्योन्यानुगतस्यैव विवक्षितत्वात् जीवप्रदेशाना च स्कन्धान्तरेऽपि तुल्यत्वाद् बृहत्तरस्कन्धानुपपत्तिः, जीवप्रदेशपुद्गलसाकल्यवृद्धौ हि महत्तरत्वमिति, अत्र बहु वक्तव्यं तत्तु नोच्यते ग्रन्थविस्तरभयाद् गमनिकामात्रमेतत्, ' सेत ' मित्यादि निगमनं। ' से किं त ' मित्यादि ( ५३-४१ ) अनेकद्रव्यश्चासौ स्कन्धश्चेति समासः, विशिष्टैकपरिणामपरिणतो नरजङ्घोरुरदनकेशाद्यनेकद्रव्यसमुदाय इत्यर्थः, तथा च ह- ' तस्सेव '-त्यादि, तस्यैव विवक्षितस्कन्धस्य देशः-एकदेशः अपचितो जीवप्रदेशविरहादिति भावना, तथा तस्यैव देश उपचितो जीवप्रदेशभावादिति हृदयं, एतदुक्तं भवति-जीवप्रयोगपरिणामितानि जीवप्रदेशावचितानि च नखरोमरदनकेशादीन्यनेकानि द्रव्याणि तथाऽन्यानि जीवप्रयोगपरिणामितानि जीवप्रदेशोपचितानि च चरणजङ्घोरुप्रभृतानि प्रभूतान्येव, एतेषामपचितोपचितानामनेकद्रव्याणां पुनर्यो विशिष्टैकपरिणामो देहाख्यः सोऽनेकद्रव्य इति, अत्राह- ननु द्रव्यस्कन्धादस्य को विशेष ? इति, उच्यते, न किल यावानेव जीवप्रदेशानुगतस्तावानेव विशिष्टैकपरिणामपरिणतः परिगृह्यते, न नखाद्यपेक्षयापि, अयं तु नखाद्यपेक्षयाऽपीत्ययं विशेष इत्यलं प्रसङ्गेन। ' सेत ' मित्यादि निगमनं 'से किं त'-मित्यादि सुगमं ( ५५-४२ ) यावत् ' एतेसि ' मित्यादि नवरमागमतो भावस्कन्धः ज्ञ उपयुक्त तदर्थोपयोगपरिणामपरिणत इत्यर्थः, नोआगमतस्तु ज्ञानक्रियासमूहमय इति, अत एवाह ' एतेसिं चेव ' इत्यादि ( ५६-४१ ) एतेषामेव प्रस्तुतावश्यकभेदानां सामायिकादीनां षण्णामध्ययनानां समुदायसमितिसमागमेन, इहाध्ययनमेव पदवाक्यसमुदायत्वात् समुदायः, समुदायानां समितिः--मेलकः, समुदाय-

मेलकः समुदायसमितिः, इयं च स्वस्वभावव्यवस्थितानामपि भवति अत एकीभावप्रतिपत्त्यर्थमाह- समागमेन समुदयसमितेः समागमो विशिष्टैकपरिणाम इति समासस्तेन आवश्यकश्रुतभावस्कन्ध इति लभ्यते, अयमत्र भावार्थः—सामायिकादीनां षण्णामध्ययनानां समावेश। ज्ञानदर्शनक्रियोपयोगवतो नोआगमतो भावस्कन्धः, नोशब्दस्य मिश्रवचनत्वात् क्रियाया अनागमत्वादिति, निगमनं । 'तस्स ण' मित्यादि ( ५७-४३ ) पूर्ववत्, यावत् 'गणकाय' गाहा ( *५-४३ ) व्याख्या-मल्लगणवद्गणः पृथिवीसमस्तजीवकायवत्कायः व्यादि परमाणुस्कन्धवत्स्कन्धः गोवर्गवद्वर्गः शालिधान्यराशिवद्राशिः विप्रकीर्णधान्यपुञ्जीकृतपुञ्जवत्पुञ्जः गुडादिपिण्डीकृतपिंडवत् पिण्डः हिरण्यादिद्रव्यनिकरवन्निकरः तीर्थादिषु संमिलितजनसंघातवत् संघातः राजगृहाङ्गणजनाकुलवत् आकुलं पुरादिजनसमूहवत् समूहः 'सेत-मित्यादि निगमनं । आह-किं पुनरिदमावश्यकं षडध्ययनात्मकमिति ?, उच्यते, षडर्थाधिकारविनियोगात्, क एतेऽर्थाधिकारा ? इति तानुप दर्शयन्नाह—'आवस्सगस्स ण' मित्यादि ( ५८-४३ ) सावज्जगाहा (*६-४३) व्याख्या- सावद्ययोगविरतिः-सपापव्यापारविरमणं सामायिकार्थाधिकारः, उत्कीर्तनेति सकलदुःखविरेकभूतसावद्ययोगविरत्युपदेशकत्वादुपकारित्वात्सद्भूतगुणोत्कीर्तनकरणादन्तःकरणशुद्धेः प्रधानकर्मक्षयकारणत्वाद्दर्शनविशुद्धिः पुनर्बोधिलाभहेतुत्वाद्भगवतां जिनानां यथाभूतान्यासाधारणगुणोत्कीर्तना चतुर्विंशतिस्तवस्येति, गुणवत्प्रतिपत्त्यर्थं वन्दना वन्दनाध्ययनस्य, तत्र गुणा मूलगुणोत्तरगुणव्रतपिण्डविशुद्धयादयो गुणा अस्य विद्यन्त इति गुणवान् तस्य गुणवतः प्रतिपत्त्यर्थं वन्दनादिलक्षणा (प्रतिपत्तिः) कार्येति, उक्तं च 'पासत्थादी' गाहा, चशब्दात्पुष्टालम्बनमासाद्यागुणवतोऽपीत्याह, उक्तं च 'परियाय' गाह स्खलितस्य निंदा प्रतिक्रमणार्थाधिकारः कथंचित्प्रमादतः स्खलितस्य मूलगुणोत्तरगुणेषु प्रत्यागतसंवेगविशुद्ध्यमानाध्यवसायस्य प्रमादकारणमनुसरतोऽकार्यमिदमतीचेति भावयतो निंदाऽऽत्मसाक्षिकीति भावना, व्रणचिकित्सा कायोत्सर्गस्य, इयमत्र भावना--निन्दया शुद्धिमन

सादयत: व्रणसाधर्म्योपनयेनालोचनादिदशविधप्रायश्चित्तभैषजेन चरणातिचारव्रणचिकित्सेति, गुणधारणा प्रत्याख्यानार्थाधिकार इति, अयमत्र भावार्थः– यथेह मूलगुणोत्तरगुणप्रतिपत्तिः निरतिचारसंधारणं च तथा प्ररूपणमर्थाधिकार इति, चशब्दादन्ये चापान्तराला अर्थाधिकारा विज्ञेया इति, एवकारोऽवधारण इति गाथार्थः। एषां च प्रत्यध्ययनमर्थाधिकारद्वार एवावकाशः प्रत्येतव्यः। साम्प्रतं यदुक्तमादौ 'श्रुतस्कन्धाध्ययनानि चावश्यक'मिति तत्रावश्यकादिन्यासोऽभिहित इदानीमध्ययनन्यासावसरः, स चानुयोगद्वारप्रक्रमायातः प्रत्यध्ययनमोघनिष्पन्न एव वक्ष्यते, लाघवार्थमिति। साम्प्रतमावश्यकस्य यद्व्याख्यातं यच्च व्याख्येयं तदुपदर्शयन्नाह–'आवस्स' गाहा (*७–४४) व्याख्या-पिण्डार्थः–समुदायार्थः वर्णितः–कथितः समासेन–संक्षेपेण आवश्यकश्रुतस्कन्ध इति शास्त्रस्यान्वर्थाभिधानात्, इत ऊर्द्धमेकैकमध्ययनं कीर्तयिष्यामः- वक्ष्याम इति गाथार्थः। कीर्त्तनं कुर्वन्निदमाह–'तंजहा–सामाइय'मित्यादि (५९–४४) सूत्रसिद्धं यावत् 'तत्थ पढमज्झयणं सामाइयं' तत्रशब्दो वाक्योपन्यासार्थो निर्द्धारणार्थो वा, प्रथमं-आद्यं शेषचरणादिगुणाधारत्वात्प्रधानं मुक्तिहेतुत्वाद्, उक्तं च- 'सामायिकं गुणानामाधारः खमिव सर्वभावानाम्। नहि सामायिकहीनाश्चरणादिगुणान्विता येन ॥ १ ॥ तस्माज्जगाद भगवान् सामायिकमेव निरुपमोपायम्। शारीरमानसानेकदुःखनाशस्य मोक्षस्य ॥ २ ॥ बोधादेरधिकमयनमध्ययनं प्रपञ्चतो वक्ष्यमाणशब्दार्थं सामायिकम्, इह च समो–रागद्वेषवियुतो यः सर्वभूतान्यात्मवत् पश्यति, आयो लाभः प्राप्तिरिति पर्यायाः, समस्य आयः समायः, समो हि प्रतिक्षणमपूर्वैर्ज्ञानदर्शनचरणपर्यायैर्भवाटवीभ्रमणसंक्लेशविच्छेदकैर्निरुपमसुखहेतुभिरधःकृतचिन्तामणिकल्पद्रुमोपमैर्युज्यते, स एव समायः प्रयोजनमस्याध्ययनसंवेदनानुष्ठानवृन्दस्येति सामायिकं, समाय एव सामायिकं तस्य सामायिकस्य 'ण'मिति वाक्यालङ्कारे 'इमे' त्ति अमूनि वक्ष्यमाणलक्षणानि महापुरस्येव चत्वारीति संख्या न त्रीणि नापि पञ्च अनुयोगद्वाराणि, इहाध्ययनार्थकथनविधिरनुयोगः, द्वाराणीव

द्वाराणि—नगरप्रवेशमुखानि, सामायिकपुरस्यार्थाधिगमोपायद्वाराणीत्यर्थः भवंति, 'तद्यथे' त्युपन्यासार्थः 'उवक्कमे' त्यादि, इह च नगरदृष्टान्तमाचार्याः प्रतिपादयन्ति, यथा ह्यकृतद्वारमनगरमेव भवति, कृतैकद्वारमपि दुरधिगमनं कार्यातिपत्तये च, चतुर्मूलद्वारं तु प्रतिद्वारानुगतं सुखाधिगमं कार्यानतिपत्तये च, एवं सामायिकपुरमप्यर्थाधिगमोपायद्वारशून्यमशक्याधिगमं भवति, एकद्वारानुगतमपि च दुरधिगमं, सप्रभेदचतुर्द्वारानुगतं तु सुखाधिगममित्यतः फलवान् द्वारोपन्यास इति, तत्रोपक्रमणमुपक्रम इति भावसाधनः, शास्त्रस्य न्यासदेशसमीपीकरणलक्षणः, उपक्रम्यते वाऽनेन गुरुवाग्योगेनेत्युपक्रम इति करणसाधनः, उपक्रम्यतेऽस्मादिति वा विनीतविनेयविनयादित्युपक्रम इत्यपादानसाधनः, तथा च शिष्यो गुरुं विनयेनाराध्यानुयोगं कारयन्नात्मनाऽपादानार्थे वर्त्तत इति । एवं निक्षेपणं निक्षेपः निक्षिप्यते वा अनेनास्मिन्नस्मादिति वा निक्षेपः न्यासः स्थापनेति पर्यायः, एवमनुगमनमनुगमः अनुगम्यतेऽनेनास्मिन्नस्मादिति वाऽनुगमः, सूत्रस्यानुकूलः परिच्छेद इत्यर्थः, एवं नयनं नयः नीयतेऽनेनास्मिन्नस्मादिति वा नयः, अनन्तधर्मात्मकस्य वस्तुन एकांशपरिच्छेद इत्यर्थः। आह-एषामुपक्रमादिद्वाराणां किमित्येवं क्रम इति, अत्रोच्यते, न ह्यनुपक्रान्तं सदसमीपीभूतं निक्षिप्यते, न चानिक्षिप्तं नामादिभिरर्थतोऽनुगम्यते, न चार्थतोऽननुगतं नयैर्विचार्यत इत्यतोऽयमेव क्रम इति, उक्तं च–' संबध्धमुपक्रमतः समीपमानीय रचितनिक्षेपम्। अनुगम्यतेऽथ शास्त्रं नयैरनेकप्रभेदैस्तु ॥१॥ तत्रोपक्रमो द्विप्रकारः-शास्त्रीय इतरश्च, तत्रेतराभिधित्सयाऽऽह–' से किं त ' मित्यादि (६०–४५) वस्तुतो भावितार्थमेव, यावत् ' से किं तं जाणगसरीरभवियसरीरवइरित्ते दव्वोवक्कमे ' इत्यादि, त्रिविधः प्रज्ञप्तस्तद्यथा–' सचित्ते ' त्यादि, ( ६१–४६ ) द्रव्योपक्रम इति वर्त्तते, शेषाक्षरार्थः सचित्तद्रव्योपक्रमनिगमनावसानः सूत्रसिद्ध एव, भावार्थस्त्वयमिह–'सचित्त' त्यादि, द्रव्योपक्रमः द्विपदचतुष्पदापदभेदभिन्नः,एकैको द्विविधः–परिकर्म्मणि वस्तुविनाशे च, तत्र परिकर्म्म–द्रव्यस्य गुणविशेषपरिणामकरणं तस्मिन् सति, तद्यथा–घृताद्युपयोगेन नटादीनां वर्णा-

दिकरणमथवा वर्णादिकरणपद्धनादिक्रियेति, अन्ये शास्त्रगान्धर्वनृत्यादिकलासम्पादनमपि द्रव्योपक्रमं व्याचक्षते, इदं पुनरसाधु, विज्ञानविशे-षाभिव्यञ्जनाच्चात्मादिपरिणामत्व, तस्य च भावत्वादिति, किंत्वात्मद्रव्यसंस्कारविवक्षाऽपेक्षया शरीरवर्णादिकरणवत्स्यादपीति, एवं चतुष्पदाना-मपि हस्त्यश्वादीनां शिक्षागुणविशेषकरणं, एवमपदानां अप्याम्रादीनां वृक्षविशेषाणां वृक्षायुर्वेदोपदेशाद्वार्द्धक्यादिगुणापादनमिति, एतत्फ-लानां वा गर्त्ताप्रक्षेपकोद्रवपलालादिस्थगनादिनेति, आह-यः स्वयं कालान्तरभाव्युपक्रम्यते यथा तरोर्वार्द्धक्यादि तत्र परिकर्म्मणि द्रव्योपक्र-मता युक्ता, वर्णकरणकलादिसंपादनस्य तु कालान्तरेऽपि विवक्षितहेतुजालमन्तरेणानुपपत्तेः कथं परिकर्म्मणि द्रव्योपक्रम इति, अत्रोच्यते, विवक्षितहेतुजालमन्तरेणानुपपत्तेरित्यसिद्धं, कथं ?, वर्णस्य तावन्नामकर्म्मविपाकित्वात्स्वयमपि भावात्, कलादीनां क्षायोपशमिकत्वात्तस्य च कालान्तरे स्वयमपि संभवात्, विभ्रमविलासादीनां च युवावस्थायां दर्शनात्, तथा वस्तुविनाशे च पुरुषादीनां खड्गादिभिर्विनाश एवोपक्र-मण इति । आह-परिकर्म्मवस्तुनाशोपक्रमयोरभेद एव उभयत्र पूर्वरूपपरित्यागेनोत्तरावस्थापत्तेरिति, अत्रोच्यते, परिकर्मोपक्रमजनितोत्तर-कालावस्थायामपि विशेषेण प्राणिनां प्रत्यभिज्ञानदर्शनात्, वस्तुनाशोपक्रमसंपादितोत्तरधर्म्मरूपे तु वस्तुन्यदर्शनाद्विशेषसिद्धिरिति, अथवैकत्र नाशस्यैव विवक्षितत्वाददोषः, 'से किं तं अचित्तदव्वोवक्कमे' त्यादि ( ६५-४६ ) निगमनं, निगदसिद्धमेव, नवरं खण्डादीनां गुडादी-नामग्निप्रयोगसंयोगादिना माधुर्यगुणविशेषकरणं विनाशश्च, मिश्रद्रव्योपक्रमस्तु स्थासकादिविभूषिताश्वादिविषय एवेति, विवक्षातश्च कारक-योजना द्रष्टव्या, द्रव्यस्य द्रव्येण द्रव्याद् द्रव्ये वोपक्रमो द्रव्योपक्रम इति । 'से किं तं' मित्यादि, ( ६७-४८ ) क्षेत्रस्योपक्रमः क्षेत्रोपक्रम इति, आह-क्षेत्रममूर्त्तं नित्यं च, अतस्तस्य कथं करणविनाशाविति ?, अत्रोच्यते, तद्व्यवस्थितद्रव्यकरणविनाशभावादुपचारतः खल्वदोषः, यथा चाह-आधारव्यपदेशो मुख्य एव, मञ्चाः क्रोशन्तीति यथा, तथा चाह सूत्रकारः-' जमिण ' मित्यादि, यद्धलकुलिकादिभिः क्षेत्राण्यु-

पक्रम्यन्ते–योग्यतामापाद्यन्ते आदिशब्दाद्विनाशकारणगजेन्द्रवधादिपरिग्रहः ' से त ' मित्यादि निगमनं । ' से किं त ' मित्यादि, ( ६८–४८ ) कालस्य वर्त्तनादिरूपत्वात् द्रव्योपक्रम एवोपचारात् कालोपक्रम इति, चंद्रोपरागादिपरिज्ञानलक्षणो वा, यद्वा 'जं ण' मित्यादि, यन्नालिकादिभिः काल उपक्रम्यते–ज्ञानयोग्यतामापाद्यते, नालिका–घटिका, आदिशब्दात् प्रहरादिपरिग्रहः, ' से त ' मित्यादि निगमनवाक्यं, भावोपक्रमो द्विधा–आगमतो नोआगमतश्च, आगमतो ज्ञाता उपयुक्तः, नोऽआगमतस्तु प्रशस्तोऽप्रशस्तश्चेति, तत्राप्रशस्तो डोड्डिणिगणिकामात्यादीनां, एत्थोदाहरणानि-एगा मरुगिणी, सा चिंतेति–किह धूताओ सुहिताओ होज्जात्ति ?, तो जेट्ठिता धूया सिक्खाविया, जहा-वरंती मत्थए पण्हीए आहणिज्जासि, ताए आहतो, सो तुट्ठो पादं मद्दितुमारद्धो, ण दुक्खावियत्ति, तीए मायाए कहियं, ताए भणियं-जं करेहि तं करेहि, ण एस किंचि तुज्झ अवरज्झतित्ति, बितिया सिक्खाविया, तीएवि आहओ, सो झंखित्ता उवसंतो, सा भणति–तुमंपि वीसत्था विहर, णवरं झंखणओ एसोत्ति, तइया सिक्खविया, तीएवि आहओ, सो रुट्ठो, तेण दढं पिट्टिया धाडिया य, तं अकुलपुत्ती जा एवं करेसि, तीए मायाए कहियं, पच्छा कहवि अणुगमिओ-अम्ह एस कुलधम्मोत्ति, धूया य भणिया–जहा देवयस्स वट्टिज्जासित्ति, मा छड्डिहिति । एगम्मि णयरे चउसट्ठिकलाकुसला गणिया, तीए परभावोवक्कमणनिमित्तं रतिघरम्मि सव्वाओ पगतीओ नियनियवावारं करेमाणीओ आलिहावियाओ, तत्थ य जो जो वच्चइमाई एइ सो सो नियं २ सिप्पं पसंसति, णायभावो त सुअणुयत्तो भवति, अणुयत्तिओ य उवयारं गाहिओ खद्धं खद्धं दव्वजातं वितरेति, एसवि अपसत्थो भावोवक्कमो । एगम्मि णयरे कोई राया अस्सवाहणियाए सह अमच्चेण णिग्गओ, तत्थ य से अस्सेणऽयाभेणं खलिणे काइया वोसिरिया, खलरं बद्धं, तं च पुढविथिरत्तणओ तहट्ठियं चेव रण्णा पडिनियत्तमाणेण सुइरं निज्झाइयं, चिंतियं चाणेण--इह तलागं सोहणं हवइत्ति, ण उण वुत्तं, अमच्चेणं इंगितागारकुसलेण रायाणमणापुच्छिय महासरं खणावियं चेव, पालीए आरामो

से पवरो कओ, तेणं कालेणं अस्सवाहणियाए गच्छंतेण दिट्ठं, भणियं चडणेण–केणेयं खणावितं ?, अमच्चेण भणियं–सामिराय ! तुम्हेहिं चेव, कहंपि य ?, अवलोयणाए कहिए परितुट्ठेण संवड्ढणा कता, एसवि अपसत्थो भावोवक्कमोत्ति, उक्तोऽप्रशस्तः । इदानीं प्रशस्तः उच्यते, तत्र श्रुतादिनिमित्तमाचार्यभावोपक्रमः प्रशस्त इति, आह–व्याख्याङ्गप्रतिपादनाधिकारे गुरुभावोपक्रमाभिधानमनर्थकमिति, न, तस्यापि व्याख्याङ्गत्वात्, उक्तं च–" गुर्वायत्ता यस्माच्छास्त्रारम्भा भवंति सर्वेऽपि । तस्माद् गुर्वाराधनपरेण हितकांक्षिणा भाव्यम् ॥ १ ॥ तथा भाष्यकारेणाप्यभ्यधायि–' गुरुचित्तायत्ताइं वक्खाणंगाइं जेण सव्वाइं । जेण पुण सुप्पसण्णं होति तयं तं तहा कुज्जा ॥ १ ॥ आगारिंगित-कुसलं जइ सेयं वायसं वदे पुज्जा । तहविय सिं णवि कूडे विरहंमि य कारणं पुच्छे ॥ २ ॥ निवपुच्छिएण भणिओ गुरुणा गंगा कओ मुही वहति ? । संपादितवं सीसो जह तह सव्वत्थ कायव्व ॥ ३ ॥" मित्यादि, आह–यद्येवं गुरुभावोपक्रम एवाभिधातव्यो न शेषाः, निष्प्रयोजनत्वात्, न, गुरुचित्तप्रसादनार्थमेव तेषामुपयोगित्वात्, तथा च देशकालावपेक्ष्य परिकर्म्मनाशौ द्रव्याणामुदकौदनादीनामाहारादिकार्येषु कुर्वन् विनेयो गुरोर्हरति चेतः, अथवोपक्रमसाम्यात्प्रकृते निरुपयोगिनोऽप्यन्यत्रोपयोक्ष्यन्त इत्यलं प्रसङ्गेन, उक्त इतरः । अधुना शास्त्रीयप्रतिपादनायाह—' अहवे ' त्यादि ( ७०—५१ ), यद्वा प्रशस्तो द्विविधः—गुरुभावोपक्रमः शास्त्रभावोपक्रमश्च, तत्र गुरुभावोपक्रमः प्रतिपादित एव, शास्त्रभावोपक्रमं तु प्रतिपादयन्नाह–' अहवे ' त्यादि, अथवेति विकल्पार्थः, उपक्रमो-भावोपक्रमः षड्विधः प्रज्ञप्तस्तद्यथा–' अणुपुव्वी ' त्यादि, उपन्याससूत्रं निगदसिद्धमेव, ' से किं त ' मित्यादि ( ७१–५१ ), इह पूर्वं प्रथममादिरिति पर्यायाः, पूर्वस्य पश्चादनुपूर्वं तस्य भाव इति ' गुणवचनब्राह्मणादिभ्यः कर्म्मणि ष्यञ् चेति ( पा. ५–१–१२४ ) स चायं भावप्रत्ययो नपुंसकलिङ्गे यल्करणसामर्थ्याच्च स्त्रीलिङ्गेऽपि, तथा हि तस्मादनुपूर्वभावः आनुपूर्वी अनुक्रमोऽनुपरिपाटीति पर्यायाः, त्र्यादि-

वस्तुसंहतिरिति भावः, इयमानुपूर्वी दशविधा—दशप्रकाराः प्रज्ञप्तास्तद्यथा 'नामानुपूर्वी' त्यादि, वस्तुतो भावितार्थत्वात्सूत्रसिद्धमेव तावद्यावत् 'उवणिहिया य' (७२–५१) 'अणोवणिहिया य' तत्र निधानं निधिर्न्यासो विरचना निक्षेपः प्रस्तावः स्थापनेति पर्यायाः, तथा च लोके–निधेहीदं निहितमिदमित्यर्थे निक्षेपार्थो गम्यते, उप-सामीप्येन निधानमुपनिधिः–विवक्षितस्यार्थस्य विरचनायाः प्रत्यासन्नता, उपनिधिः प्रयोजनमस्या इति प्रयोजनार्थे ठक् औपनिधिकी, एतदुक्तं भवति–अधिकृताध्ययनपूर्वानुपूर्व्यादिरचनाश्रयप्रस्तारोपयोगिनी औपनिधिकीत्युच्यते, न तथा अनौपनिधिकी, 'तत्थ ण' मित्यादि, तत्र याऽसावौपनिधिकी सा स्थाप्या–सांन्यासिकी तिष्ठतु तावद् अल्पतरवक्तव्यत्वादस्याः, किंतु यत्रैव बहु वक्तव्यमस्ति तत्र यः सामान्योऽर्थः सोऽन्यत्रापि प्ररूपित एव लभ्यत इति गुणाधिक्यसंभवात् सैव प्रथममुच्यत इति, आह च सूत्रकारः–'तत्थ ण' मित्यादि, तत्र याऽसावनौपनिधिकी सा नयवक्तव्यताश्रयणात् द्रव्यास्तिकनयमतेन द्विविधा प्रज्ञप्ता, नैगमव्यवहारयोः संग्रहस्य च, अयमत्र भावार्थः–इहौघतः सप्त नया भवन्ति, नैगमादयः, उक्तं च–नैगमसंग्रहव्यवहारऋजुसूत्रशब्दसमभिरूढैवंभूता नयाः' एते च नयद्वयेऽवस्थाप्यन्ते-द्रव्यास्तिकः पर्यायास्तिकश्च, तत्राद्यास्त्रयो द्रव्यास्तिकः, शेषाः पर्यायास्तिक इति, पुनः द्रव्यास्तिकोऽप्योघतो द्विभेदः–अविशुद्धो विशुद्धश्च, अविशुद्धो नैगमव्यवहारौ विशुद्धः संग्रह इति, कथं ?, येन नैगमव्यवहारौ कृष्णाद्यनेकगुणाधिष्ठितं त्रिकालविषयं अनेकभेदस्थितं नित्यानित्यं द्रव्यमित्येवंवादिनौ, संग्रहस्तु परमाण्वादिसामान्यवादीत्यलं विस्तरेण। 'से किं त' मित्यादि अत्राप्यल्पवक्तव्यत्वात् संग्रहाभिधानं पश्चादिति, पञ्चविधाः प्रज्ञप्तास्तद्यथा 'अर्थपदप्ररूपणते' त्यादि, (७३–५२) तत्र अर्यत इत्यर्थः तद्युक्तं–तद्विषयं तदर्थं वा पदं अर्थपदं तस्य प्ररूपणा–कथनं तद्भावोऽर्थपदप्ररूपणता, संज्ञासंज्ञिसम्बन्धप्ररूपणतेत्यर्थः, तथा भंगसमुत्कीर्त्तनता, इहार्थपदानामेव समुदितविकल्पकरणं भंगः भंगस्य भंगयोः भङ्गानां वा समुत्कीर्त्तनं–उच्चारणं भंगसमुत्कीर्त्तनं तद्भाव इति समासः,

त्या भङ्गोपदर्शनता, इह यो भङ्गस्तेनार्थपदेन यैर्वार्थपदैरुपजायते तस्य तथोपदर्शनं २ तद्भाव-इति विग्रहः, सूत्रतोऽर्थतश्च प्ररूपणेत्यर्थः, ग्या समवतारः-इहानुपूर्वीद्रव्याणां स्वस्थानपरस्थानसमवतारान्वेषणाप्रकारः समवतार इति, तथानुगमः आनुपूर्व्यादीनामेव सत्पदप्ररूपणा-दैभिरनुयोगद्वारैरनेकधाऽनुगमनं अनुगम इति । ' से किं त ' मित्यादि, ( ७४-५३ ) ' तिपदेसिए आणुपुव्वी ' त्रिप्रदेशिकाः स्कन्धाः आनुपूर्व्यः, अयमत्र भावार्थः- इहादिमध्यान्तांशपरिग्रहेण सावयवं वस्तु निरूप्यते, तत्र कः आदि किं मध्यं कोऽन्त इति?, लोकप्रसिद्धमेव, यस्मा-त्परमस्ति न पूर्वं स आदिः, यस्मात्पूर्वमस्ति न परमंतः सः, तयोरंतरं मध्यमुपचरति, तदेतत् त्रयमपि यत्र वस्तुरूपेण मुख्यमस्ति तत्र गणनाक्रमः सम्पूर्ण इतिकृत्वा पूर्वस्य पश्चादनुपूर्वं तस्य भाव आनुपूर्वी , एतदुक्तं भवति-संबन्धिशब्दा ह्येते परस्परसापेक्षाः प्रवर्त्तन्त इति यत्रैषां मुख्यो व्यपदेश्यव्यपदेशकभावोऽस्ति अयमस्यादिरयमस्यान्त इति तत्रानुपूर्वीव्यपदेश इति, त्रिप्रदेशादिषु संभवति नान्यत्रेति, यः पुनरसंसक्तं रूपं केनचिद्वस्त्वन्तरेण शुद्ध एव परमाणुस्तस्य द्रव्यतः अनवयवत्वात् आदिमध्यावसानत्वाभावात् अनानुपूर्वीत्वं, यस्तु द्विप्रदेशिकः स्कन्धस्त-स्याप्याद्यन्तव्यपदेशः परस्परापेक्षयाऽस्तीतिकृत्वा अनानुपूर्वीत्वमशक्यं प्रतिपत्तुं, अथानुपूर्वीत्वं प्रसक्तं तदपि चावधिभूतवस्तुरूपस्यासंभवात् अपरिपूर्णत्वात् न शक्यते वक्तुमिति उभाभ्यामवक्तव्यत्वात् अवक्तव्यकमुच्यते, यस्मान्मध्ये सति मुख्य आदिर्लभ्यते मुख्यश्चान्तः परस्परा-पेक्षेण, तदत्र मध्यमेव नास्तीतिकृत्वा कस्यादिः कस्य वान्त इतिकृत्वा व्यपदेशाभावात् स्फुटमवक्तव्यकं, ' तिपदेसिया आणुपुव्वीउ ' इत्यादि, बहुवचननिर्देशः, किमर्थोऽयमिति चेत् आनुपूर्व्यादीनां प्रतिपदमनन्तव्यक्तिख्यापनार्थः, नैगमव्यवहारयोश्चेत्थंभूताभ्युपगम-प्रदर्शनार्थ इति, अत्राह-एषां पदानां द्रव्यवृद्ध्यनुक्रमादेवमुपन्यासो युज्यते-अनानुपूर्वी अवक्तव्यकं आनुपूर्वी च, पश्चानुपूर्व्या च व्यत्ययेन, तत् किमर्थमुभयमुल्लंघ्यान्यथा कृतमिति, अत्रोच्यते, अनानुपूर्व्यपि व्याख्यानांगमिति ख्यापनार्थं, किंचान्यत्- आनुपूर्वीद्रव्यबहुत्वज्ञापनार्थं

स्थानयत्नज्ञापनार्थं चादावानुपूर्व्या उपन्यासः, ततोऽल्पतरद्रव्यत्वादवक्तव्यकस्येत्यलं विस्तरेण । 'सेत' मित्यादि निगमनं, 'एताए ण' मित्यादि, ( ७५-५५ ) एतयाऽर्थप्ररूपणया किं प्रयोजनमित्यत्राह- एतया भङ्गसमुत्कीर्त्तनता क्रियते, सा चैवमवगन्तव्या-त्रयाणामानुपूर्व्यादिपदानामेकवचनेन त्रयो भङ्गाः, बहुवचनेनापि त्रयः, एते चासंयोगतः, संयोगेन तु आनुपूर्व्यनानुपूर्व्योश्चतुर्भङ्गी, तथा आनुपूर्व्यवक्तव्यकयोरपि सैव, तथाऽनानुपूर्व्यवक्तव्यकयोश्चेति, त्रिकसंयोगतस्तु आनुपूर्व्यनानुपूर्व्यवक्तव्यकेष्वष्टभङ्गीति, एवमेते षड्विंशतिर्भङ्गाः, अत्राह-भङ्गसमुत्कीर्त्तनं किमर्थं ?, उच्यते, वक्तुरभिप्रेतार्थप्रतिपत्तये नयानुमतप्रदर्शनार्थं, तथाहि-असंयुक्तं संयुक्तं समानमसमानं अन्यद्रव्यसंयोगे(ऽसंयोगे) च यथा यक्ता प्रतिपादयति तथैवैषो प्रतिपाद्यते इति नयानुमतप्रदर्शनं, एषोऽत्र भावार्थः, भङ्गकास्तु ग्रन्थत एवानुसर्त्तव्याः, ' से त ' मित्यादि निगमनं, शेषमनिगूढार्थं यावत् ' तिपदेसिए आणुपुव्वी ' इत्यादि, त्रिप्रदेशिकोऽर्थः आनुपूर्वीत्युच्यते, एवमर्थकथनपुरस्सराः शेषभङ्गा अपि भावनीया इति,एतदुक्तं भवति-तैरेव भंगकाभिधानैस्त्रिप्रदेशपरमाणुपुद्गलद्विप्रदेशार्थकथनविशिष्टैस्तदभिधेयाव्याख्यानं भंगोपदर्शनतेति, आह-अर्थपदप्ररूपणाभगसमुत्कीर्त्तनाभ्यां भंगोपदर्शनार्थताऽवगमाद्भेदतस्तदभिधानमयुक्तमिति, अत्रोच्यते, न,उभयसंयोगस्य वस्त्वन्तरत्वात् नयमतवैचित्र्यप्रदर्शनार्थत्वाच्चादोष इति, शेषं निगमनं सूत्रसिद्धमिति । ' से किं तं समोतारे ' इत्यादि ( ७९-५८ ) अवतरणमवतारः-सम्यगविरोधतः स्वस्थान एवावतारः समवतारः, इहानुपूर्वीद्रव्याणामानुपूर्वीद्रव्येष्ववतारः न शेषेषु, स्वजातावेव वर्त्तन्ते न तु स्वजातिव्यतिरेकेणेति भावना, एवमनानुपूर्व्यादिष्वपि भावनीयमकृच्छ्रावसेया,चाक्षरगमनिकेति न प्रतिपदं विवरणं प्रति प्रयास इति । ' से किं त ' मित्यादि ( ८०-५९ ) अनुगमः-प्राग्निरूपितशब्दार्थ एव नवविधो-नवप्रकारः प्रज्ञप्तस्तद्यथा-' संतपदपरूवणा ' गाहा ( *८-५९ ) व्याख्या-सच्च तत्पदं च सत्पदं तस्य प्ररूपणं सत्पदप्ररूपणं तस्य भावः सत्पदप्ररूपणता-सदर्थगोचरा आनुपूर्व्यादिपदप्ररूपणता कार्या, तथा आनुपूर्व्यादिद्र-

व्यप्रमाणं वक्तव्यं, तथाऽऽनुपूर्व्यादिद्रव्याधारः क्षेत्रं वक्तव्यं, तथा स्पर्शना वक्तव्या, क्षेत्रस्पर्शनयोरयं विशेषः–' एगपदेसोगाढं सत्तपदेसा य से फुसणा ' कालश्चानुपूर्व्यादिस्थितिकालो वक्तव्यः, तथा अन्तरं- स्वभावपरित्यागे सति पुनस्तद्भावप्राप्तिविरह इत्यर्थः, तथा भाग इत्यानुपूर्वीद्रव्याणि शेषद्रव्याणां कतिभाग इत्यादि, तथा भावो वक्तव्यः, आनुपूर्व्यादिद्रव्याणि कस्मिन् भावे वर्त्तन्त इति, तथाऽल्पबहुत्वं वक्तव्यम्, आनुपूर्व्यादीनामेव मिथो द्रव्यार्थप्रदेशार्थोभयार्थैः, व्यासार्थं तु प्रत्यवयवं ग्रन्थकार एव प्रपञ्चतो वक्ष्यते इति, तत्राद्यमवयवमधिकृत्याह– ' णेगमववहाराणं आणुपुव्विदव्वाइं किं अत्थि णत्थी ' त्यादि, (८१–६०) कुतस्ते संशयः ?, घटादौ विद्यमाने खकुसुमादौ वाऽविद्यमाने वाऽविशेषेणाभिधानप्रवृत्तेः, अत्र निर्वचनमाह–'नियमा अत्थि' तथा वृद्धैरप्युक्तं–जम्हा दुविहाभिहाणं सत्थयमितरं च घडखपुप्फादी। दिट्ठमओ से संका णत्थि य अत्थित्ति सिस्सस्स ॥ १ ॥ अत्थित्ति य गुरुवयणं अभिहाणं सत्थयं जतो सव्वं। इच्छाभिहाणपच्चयतुल्लभिधेया सदत्थमिणं ॥ २ ॥ ' यश्चास्य सदर्थः स वक्त एव, द्वारं। द्रव्यप्रमाणमधुना–' नेगमववहाराणं आणुपुव्विदव्वाइं किं संखेज्जाइं ' (८२–६०) इत्यादि निगमनान्तं सूत्रसिद्धमेव, असंख्येयप्रदेशात्मके च लोकेऽनन्तानामानुपूर्व्यादिद्रव्याणां सूक्ष्मपरिणामयुक्तत्वादवस्थानं भावनीयमिति, दृश्यते चैकगृहान्तर्वर्त्याकाशप्रदेशेष्वेकप्रभापरमाणुव्याप्तेष्वपि प्रतिप्रदीपं भवतामेवानेकप्रदीपप्रभापरमाणूनामवस्थानमिति, न च दृष्टेऽनुपपन्नं नामेत्यलं प्रसङ्गेन, द्वारं। क्षेत्रमधुना, तत्रेदं सूत्रं ' णेगमववहाराणं आणुपुव्विदव्वाइं लोयस्स किं संखेज्जइभागे होज्जा ' ( ८३–६० ) इत्यादि प्रश्नसूत्रं, एकानुपूर्वीद्रव्यापेक्षया तत्प्रमाणसंभवे सति प्रश्नसूत्रं सुगमं, निर्वचनसूत्रं च ग्रन्थादेव भावनीयं, नवरं ' सव्वलोए वा होज्ज ' त्ति यदुक्तं तत्राचित्तमहास्कन्धः सर्वलोकव्यापकः समयावस्थायी सकललोकप्रमाणोऽवसेय इति, ' णाणादव्वाइं पडुच्च ' इत्यादि, नानाद्रव्याण्यानुपूर्वीपरिणामवन्त्येव प्रतीत्य प्रकृत्य वाऽधिकृत्येत्यर्थः नियमात्–नियमेन सर्व्वलोके, न शेषभागेष्विति,'होज्ज'-

सि आर्यत्वान्नयन्ति वर्तन्त इत्यर्थः, यस्मादेकैकस्मिन्नाकाशप्रदेशे सूक्ष्मपरिणामपरिणतान्यनन्तान्यानुपूर्वीद्रव्याणि विद्यन्त इति भावना, अनानुपूर्वीअवक्तव्यकद्रव्ये तु एकं द्रव्यं प्रतीत्य संख्येयभाग एव वर्तन्ते, न शेषभागेषु, यस्मात्परमाणुरेकप्रदेशावगाढ एव भवति, अवक्तव्यकं त्वेकप्रदेशावगाढं द्विप्रदेशावगाढं च, नानाद्रव्यभावना पूर्ववदिति, द्वारं । साम्प्रतं स्पर्शनाद्वारावसरः, तत्रेदं सूत्रं–' णेगमववहाराण '-मित्यादि ( ८४–९५ ) निगमनान्तं निगदसिद्धमेव, नवरं क्षेत्रस्पर्शनयोरयं विशेषः--क्षेत्रमवगाहमात्रं स्पर्शना तु स्वचतसृष्वपि दिक्षु तद्बहिरपि वेदितव्येति, यथेह परमाणोरेकप्रदेशं क्षेत्रं सप्तप्रदेशा स्पर्शनेति, स्यादेतद्--एवं सत्यणोरेकत्वं हीयत इति, उक्तं च-' दिग्भागभेदो यस्यास्ति, तस्यैकत्वं न युज्यते ' इत्येतदयुक्तं, अभिप्रायापरिज्ञानात्, नह्यंशतः स्पर्शना नाम काचिद्, अपि तु नैरन्तर्यमेव स्पर्शनां ब्रूम इति, अत्र बहु वक्तव्यं तत्तु नोच्यते विस्तरभयादेति, द्वारं । साम्प्रतं कालद्वारं, तत्रेदं सूत्रं-' णेगमववहाराण ' मित्यादि, (८५-९३) निगमनं पाठसिद्धमेव, णवरमियमित्थं भावणा--दोण्हं परमाणूणं एक्को परमाणू संजुत्तो समयं चिट्ठिऊण विजुत्तो, एवं आणुपुव्विदव्वं जहण्णेणं एगसमयं होति, उक्कोसेणं असंखेज्जं कालं चिट्ठिऊण विउत्तो, एवमसंखेज्जं कालं, णाणादव्वाइं पुण पडुच्च सव्वद्धा--सर्वकालमेव विद्यन्ते, अणाणुपुव्वीसु तु एगो परमाणू एगसमयं एकल्लगो होऊण एक्केण वा दोहिं वा बहुपरमाणूहिं वा समं जुज्जइ, एवं जहण्णेणं एकं समयं होति, उक्कोसेणं असंखेज्जकालं एकल्लगो होऊण समं जुज्जइ, एवमसंखेज्जं कालं, णाणादव्वाइं पुण पडुच्च सव्वकालं विज्जंति, एवं अवत्तव्वगेसुवि एगं दव्वं पडुच्च दो परमाणू एगसमयं ठाऊण विजुज्जंति, अण्णेण वा संजुज्जंति, एवं अवत्तव्वगदव्वं जहण्णेणं एकं समयं होज्जा, उक्कोसेणं असंखेज्जं कालं चिट्ठिऊण विज्जंति संजुज्जंति वा, एवं असंखेज्जं कालं, णाणादव्वाइं पडुच्च सव्वद्धं चिट्ठंति, द्वारं । अधुनाऽन्तरद्वारं, तत्रेदं सूत्रं—' णेगमववहाराणं आणुपुव्विदव्वाणं अंतरं कालओ केचिरं होती-'

व्यप्रमाणं वक्तव्यं, तथाऽऽनुपूर्व्यादिद्रव्याधारः क्षेत्रं वक्तव्यं, तथा स्पर्शना वक्तव्या, क्षेत्रस्पर्शनयोरयं विशेषः—' एगपदेसोगाढं सत्तपदेसा य से फुसणा ' कालश्चानुपूर्व्यादिस्थितिकालो वक्तव्यः, तथा अन्तरं- स्वभावपरित्यागे सति पुनस्तद्भावप्राप्तिविरह इत्यर्थः, तथा भाग इत्यानुपूर्वीद्रव्याणि शेषद्रव्याणां कतिभाग इत्यादि, तथा भावो वक्तव्यः, आनुपूर्व्यादिद्रव्याणि कस्मिन् भावे वर्त्तन्त इति, तथाऽल्पबहुत्वं वक्तव्यम्, आनुपूर्व्यादीनामेव मिथो द्रव्यार्थप्रदेशार्थोभयार्थैः, व्यासार्थं तु प्रत्यवयवं ग्रन्थकार एव प्रपञ्चतो वक्ष्यते इति, तत्राद्यमवयवमधिकृत्याह- ' णेगमववहाराणं आणुपुव्विदव्वाइं किं अत्थि णत्थी ' त्यादि, (८१–६०) कुतस्ते संशयः ?, घटादौ विद्यमाने खकुसुमादौ वाऽविद्यमाने वाऽविशेषेणाभिधानप्रवृत्तेः, तत्र निर्वचनमाह—'नियमा अत्थि' तथा वृद्धैरप्युक्तं—जम्हा दुविहाभिहाणं सत्थयमितरं व घडखपुप्फादी। दिट्ठमओ से संका णत्थि य अत्थियात्ति सिरसस्स ॥ १ ॥ अत्थित्ति य गुरुवयणं अभिहाणं सत्थयं जओ सव्वं। इच्छाभिहाणपच्चयतुल्लभिधेया सदत्थमिणं ॥ २ ॥ ' यथास्य सदर्थः स उक्त एव, द्वारं। द्रव्यप्रमाणमधुना—' नेगमववहाराणं आणुपुव्विदव्वाइं किं संखेज्जाइं ' (८२–६०) इत्यादि निगमनान्तं सूत्रसिद्धमेव, असंख्येयप्रदेशात्मके च लोकेऽनन्तानामानुपूर्व्यादिद्रव्याणां सूक्ष्मपरिणामयुक्तत्वादवस्थानं भावनीयमिति, दृश्यते चैकगृहान्तर्वर्त्याकाशप्रदेशेष्वेकप्रभापरमाणुव्याप्तेष्वपि प्रतिप्रदीपं भवतामेवानेकप्रदीपप्रभापरमाणूनामवस्थानमिति, न च दृष्टेऽनुपपन्नं नामेत्यलं प्रसङ्गेन, द्वारं। क्षेत्रमधुना, तत्रेदं सूत्रं ' णेगमववहाराणं आणुपुव्विदव्वाइं लोयस्स किं संखेज्जइभागे होज्जा ' ( ८३–६० ) इत्यादि प्रश्नसूत्रं, एकानुपूर्वीद्रव्यापेक्षया वक्ष्यमाणसंभवे सति प्रश्नसूत्रं सुगमं, निर्वचनसूत्रं च ग्रन्थादेव भावनीयं, नवरं ' सव्वलोए वा होज्ज ' त्ति यदुक्तं तत्राचित्तमहास्कन्धः सर्वलोकव्यापकः समयावस्थायी सकललोकप्रमाणोऽवसेय इति, ' णाणादव्वाइं पडुच्च ' इत्यादि, नानाद्रव्याण्यानुपूर्वीपरिणामवन्त्येव प्रतीत्य प्रकृत्य वाऽधिकृत्येत्यर्थः नियमात्—नियमेन सर्वलोके, न शेषभागेष्विति,'होज्ज'-

संजुज्जिय समयमेगं तहा चिट्ठिऊण पुणो विजुज्जइत्ति, अवत्तव्वगं चेव भवतीत्यर्थः, उक्कोसेणं अणंतकालं, कहं ?, एगमवत्तव्वगदव्वं अवत्तव्वगत्तेण विजुज्जिऊण अण्णेसु परमाणुसंगुणादेकोत्तरवृद्ध्याऽनन्ताणुकावसानेषु स्वस्थानप्रतिभेदमनन्तव्याकिवत्सु ठाणेसुक्कोसंतराधिकाराए असति उक्कोसगठितीए अच्छिऊण कालस्स अणंतत्तणओ घंसणघोलणाओ पुणोवि ते चेव परमाणू विस्ससापओगतो तहेव जुज्जंति, एवमुक्कोसतो अणंतं कालं अंतरं हवति, णाणादव्वाइं पडुच्च णत्थि अंतरं, इह लोके सदैव तद्भावादिति भावना, द्वारं । इदानीं भागद्वारं, तत्रेदं सूत्रं 'णेगमववहाराणं आणुपुव्विदव्वाइं सेसदव्वाणं कतिभागे होज्जा' ( ८७-६५ ) इत्यादि, 'सेसदव्व' त्ति अणाणुपुव्विदव्वा अवत्तव्वगदव्वा य, यथा एको रासी कओ ततो पच्छा चतुरा, एत्थ णिदरिसणं इमं–सतस्स संखेज्जतिभागे पंच, पंचभागे सतस्स वीसा भवंति, सतस्स असंखेज्जतिभागो दस, दसभागे दस चेव भवंति, सतस्स संखेज्जेसु भागेसु दोमाइएसु पंचभागेसु चत्तालीसादी भवंति, सतस्स असंखेज्जेसु भागेसु अट्ठसु दसभागेसु असीति भवति, चोदग आह–णणु एतेण णिदंसणेण सेसगदव्वाण अणुपुव्विदव्वा गोचरा भवंति, जतो सतस्स असीति थोवतरात्ति, आचार्य आह–ण मया भण्णइ तद्भागसमा ते दट्ठव्वा, तब्भागत्थेसु वा दव्वेसु ते समा, किंतु सेसदव्वाणं आणुपुव्विदव्वा असंखेज्जेसु भागेसु अधिया भवंतीति वक्कसेसो, सेसदव्वा असंखेज्जभागे भवन्तीत्यर्थः, अणाणुपुव्विदव्वा अवत्तव्वगदव्वा य आणुपुव्विदव्वाणं असंखेज्जभागे भवंति, सेसं सुत्तसिद्धमिति (भाग) द्वारं । साम्प्रतं भावद्वारं, तत्रेदं सूत्रं–' णेगमववहाराणं आणुपुव्विदव्वाइं कयरंमि भावे होज्ज ' त्तीत्यादि ( ८८–६६ ) इह कर्म्मविपाक उदयः उदय एव औदयिकः स चाष्टानां कर्म्मप्रकृतीनामुदयः तत्र भवस्तेन वा निर्वृत्त औदयिकः, उपशमो–मोहनीयकर्म्मणोऽनुदयः स एवौपशमिकस्तत्र भवस्तेन वा निर्वृत्त इति, क्षयः–कर्म्मणोऽत्यन्तविनाशः स एव क्षायिकस्तत्र भवस्तेन वा निर्वृत्त इति, कर्म्मण एव कस्यचिदंशस्य क्षयः कस्याचिदुपशमः ततश्च क्षयश्चोपशमश्च

त्यादि, ( ८६—६३ ) इह त्र्यादिस्कन्धास्त्र्यादिस्कन्धतां विहाय पुनर्यावता कालेन त एव तथा भवंतीत्यसावन्तरं, एगदव्वं आणुपुव्विदव्वं पडुच्च जहण्णेणं-सर्व्वस्तोकतया एगं समयं-काललक्खणं, कहं ?, तिपदेसियादियाओ परमाणुमादी विउत्तो समयं चिट्ठिऊण पुणो तेण दव्वेण विस्ससापओगाओ तहेव संजुज्जइ, एवमेगं समयं अंतरंति, उक्कोसेणं-उक्कोसगतया अणंतं कालं, कहं ?, ताओ चेव तिपदेसियादियाओ सो चेव परमाणुमाई विउत्तो अण्णेसु परमाणुद्व्यणुकाद्येकोत्तरवृद्ध्या अनन्ताणुकावसानेषु स्वस्थाने प्रतिभेदमनन्तव्यक्तिकेसु ठाणेसु उक्कोसमंतराधिकारातो असइं ( उक्कोस ) ठितीए अच्छिऊण कालस्स अनन्तत्तणओ घंसणघोलणाए पुणोवि नियमेण चेव तेणं दव्वेणं पओगविस्ससाभावओ तहेव संजुज्जइत्ति, एवमुक्कोसतो अणंतं कालं अंतरं भवति, णाणादव्वाइं पडुच्च णत्थि अंतरं, इह लोके सदैव तद्भावादिति भावना, अणाणुपुव्विचिंताए एगं दव्वं पडुच्च जहण्णेणं एगं समयंति, कहं?, एगो परमाणू अण्णेणं अणुमादिणा घडिऊण समयं चिट्ठित्ता विउज्जति एवं एगसमयमन्तरं, उक्कोसेणं असंखेज्जं कालं, कहं ?, अणाणुपुव्विदव्वं अण्णेण अणाणुपुव्विदव्वेण अवत्तव्वगदव्वेणं आणुपुव्विदव्वेण वा संजुत्तं उक्कोसट्ठितियमसंखेज्जकालनियमितलक्खणं होऊण ठितिअन्ते तओ भिण्णो नियमा परमाणू चेव भवति, अण्णदव्वाणेकत्तत्तणओ, एवं उक्कोसेणं असंखेज्जकालंति, एत्थ चोदगो भणति-णणु अणंतपदेसगाणुपुव्वीदव्वसंजुत्तं खंडखंडेहि विघडिऊण द्व्यणुकादिभावमपरित्यजदेवान्यान्यस्कन्धसम्बन्धस्थित्यपेक्षयाऽस्यानन्तकालमेवान्तरं कस्मान्न भवति इति, अत्रोच्यते, परमसंयोगस्थितेरप्यसंख्येयकालादूर्ध्वमभावादणुत्वेन तस्य संयुक्तत्वादणुत्वत एव वियोगभावादिति, कथमिदं ज्ञायत इति चेदुच्यते, आचार्यप्रवृत्तेः, तथाहि-इदमेव सूत्रं ज्ञापकमित्यलं चसूर्येति । ' णाणादव्वाइं ' तु पूर्ववत्, अवत्तव्वगचिंताए एगं दव्वं पडुच्च जहण्णेणं एगं समयं एवं-दुपरमाणुखंधो विउज्जिऊण एगं समयं ठाऊण पुणो संजुज्जइ, अण्णेण वा आणुपुव्वादिणा

संघातेन समयेणं तहा भिदिऊण पुणो निजुज्जइत्ति, अणंतकालं चेव भवतीत्यर्थः, उक्कोसेणं अणंतकालं, कहं ?, एगमवत्तव्वगदव्वं अवत्तव्वगत्तेण विजुज्जिऊण अण्णेसु परमाणुमगुणानेकोत्तरवृद्ध्याऽनन्ताणुकावसानेषु स्वस्थानप्रविभेदमनन्तव्यक्तिवत्सु ठाणेसु कोसंतराधिका- गत् अणंति उक्कोसगठितीए अच्छिऊण कालस्स अणंतत्तणओ संसणघोलणाओ पुणोवि ते चेव परमाणू विस्ससापओगओ तहेव जुज्जंति, एवमुक्कोसओ अणंतं कालं अंतरं हवति, णाणादव्वाइं पडुच्च णत्थि अंतर, इह लोके सदैव तद्भावादिति भावना, द्वारं । इदानीं भागद्वारं, तत्रेदं सूत्रं ' णेगमववहाराणं आणुपुव्विदव्वाइं सेसदव्वाणं कतिभागे होज्जा ' ( ८७–६९ ) इत्यादि, ' सेसदव्व ' त्ति अणाणुपु- व्विदव्वा अवत्तव्वगदव्वा य, जहा एगो रासी कओ ततो पच्छा चतुरा, एत्थ णिदरिसणं इमं–सततस्स संखेज्जतिभागे पंच, पंचभागे सततस्स वीसा भवंति, सततस्स असंखेज्जतिभागो दस, दसभागे दस चेव भवंति, सततस्स संखेज्जेसु भागेसु दोसाइएसु पंचभागेसु चत्तालीसादी भवंति, सततस्स असंखेज्जेसु भागेसु अट्ठसु दसभागेसु असीति भवति, चोदग आह–णणु एतेण णिदंसणेण सेसगदव्वाण अणुपुव्विदव्वा थोवतरा भवंति, जतो सततस्स असीति थोवतरासि, आचार्य आह–ण मया भण्णइ तब्भागसमा ते दट्ठव्वा, तब्भागत्थेसु वा एतेसु ते समा, किंतु सेसदव्वाणं आणुपुव्विदव्वा असंखेज्जेसु भागेसु अधिया भवंतीति वक्कसेसो, सेसदव्वा असंखेज्जभागे भवन्तीत्यर्थः, अणाणुपुव्विदव्वा अवत्तव्वगदव्वा य आणुपुव्विदव्वाणं असंखेज्जभागे भवंति, सेसं सुत्तसिद्धमिति (भाग) द्वारं । साम्प्रतं भावद्वारं, तत्रेदं सूत्रं–' णेगमववहा- राणं आणुपुव्विदव्वाइं कयरंमि भावे होज्ज ' त्तीत्यादि ( ८८–९६ ) इह कर्म्मविपाक उदयः उदय एव औदयिकः स चाष्टानां कर्म्म- प्रकृतीनामुदयः तत्र भवस्तेन वा निर्वृत्त औदयिकः, उपशमो–मोहनीयकर्म्मणोऽनुदयः स एवौपशमिकस्तत्र भवस्तेन वा निर्वृत्त इति, क्षयः- कर्म्मणोऽत्यन्तविनाशः स एव क्षायिकस्तत्र भवस्तेन वा निर्वृत्त इति,कर्म्मण एव कस्यचिदंशस्य क्षयः कस्यचिदुपशमः ततश्च क्षयश्चोपशमश्च

क्षयोपशमौ ताभ्यां निर्वृत्तः क्षायोपशमिकः, परिणमनं परिणामः, द्रव्यस्य तथा भाव इत्यर्थः, स एव पारिणामिकः तत्र भवस्तेन वा निर्वृत्त इति, सान्निपातिको य एषामेव द्विकादिसंयोगादुपजायते, एष शब्दार्थः, भावार्थं पुनरमीषां स्वस्थाने एवोपरिष्टाद्वक्ष्यामः, नवरं निर्वचनं, निर्वचनसूत्रोपयोगीतिकृत्वा पारिणामिकभावार्थो लेशतः प्रतिपाद्यत इति, इह परिणामः द्विविधः- सादिरनादिश्च, तत्र धर्मास्तिकायादिद्रव्यादिष्वनादिपरिणामः रूपिद्रव्येष्वादिमांस्तद्यथा अभ्रेन्द्रधनुरादिपरिणाम इत्येवमवस्थिते सतीदं निर्वचनसूत्रं ' णियमा ' इत्यादि, नियमेनावश्यंतया सादिपरिणामिके भावे भवन्ति, तथा परिणतेरनादित्वाभावात्, उत्कृष्टतो द्रव्याणां विशिष्टैकपरिणामत्वेनासंख्येयकालस्थितेः, शेषं सूत्रसिद्धं, द्वारं । साम्प्रतमल्पबहुत्वद्वारं, तत्रेदं सूत्रं-' एतेसिणं ' मित्यादि ( ८९-६७ ) द्रव्यं च तदर्थश्च द्रव्यार्थः तस्य भावो द्रव्यार्थता, एकानेकपुद्गलद्रव्येषु यथासंभवतः प्रदेशगुणपर्यायाधारतेत्यर्थः, तया द्रव्यत्वेनेतियावत्, प्रकृष्टो देशः प्रदेशः प्रदेशश्चासावर्थश्च प्रदेशार्थस्तस्य भावः प्रदेशार्थता, तेष्वेव द्रव्येषु प्रतिप्रदेशं गुणपर्यायाधारतेति भावना, तया, अणुत्वेनेत्यर्थः, द्रव्यार्थप्रदेशार्थता यथोक्तोभयरूपतया, शेषं सूत्रसिद्धं यावत 'सव्वत्थोवाइं णेगमववहाराणं अव्वत्तव्वगदव्वाइं दव्वट्ठयाए' त्ति, का तत्र भावना ?, उच्यते, संघातभेदानिमित्तालपत्वात्, तेभ्य एव अणाणुपुव्विदव्वाइं दव्वट्ठयाए विसेसाधिताइं ?, कथं ?, उच्यते बहुतरद्रव्योत्पत्तिनिमित्तत्वात्, तेभ्योऽपि आणुपुव्विदव्वाइं दव्वट्ठयाए असंखेज्जगुणाइं, कथं ?, उच्यते, त्र्याद्येकप्रदेशोत्तरवृद्ध्या द्रव्यस्थानानां निसर्गत एव बहुत्वात्, संघातभेदनिमित्तबहुत्वाच्च, इह विनेयानुग्रहार्थं भावनाविधिरुच्यते-एग दुग तिग चउप्पदेसा य ठाविता १, २, ३, ४, एत्थ संघातभेदतो पञ्च अवत्तव्वगदव्वाइं हवंति, दस अणाणुपुव्विदव्वा भेदतो संघाततो वा, एककाले तिण्णि ण आणुपुव्विदव्वा, कमेण पुण एगदुगादिसंजोगभेदतो अणेगे भवंति, अण्णे भणंति-चोद्दस हवंति, तदभिप्रायं तु न वयं सम्यगवगच्छामो अतिगंभीरत्वादिति, एवं पंचदसा-

रिसु मायेगल्वं, मव्वणुयरगतो य सद्धेयं, नान्यथावादिनो जिनाः, 'पदेसट्ठयाए सव्वत्थोवाइं णेगमववहाराण' मित्यादि, स्तोकत्वे कारणं 'अपदेसट्ठयाए' त्ति अप्रदेशार्थत्वेन नास्य प्रदेशा विद्यन्त इत्यप्रदेशः-परमाणुः, उक्तंच-'परमाणुरप्रदेश' इति तद्भावस्तेन, अणोर्निरवयवत्वादित्यर्थः, आह--प्रदेशार्थतया सर्वस्तोकानीत्यभिप्राये अप्रदेशार्थत्वेनेति कारणाभिधानमयुक्तं, विरोधात्, स्वभावो हि हेतुर्यदि प्रदेशार्थता कथमप्रदेशार्थता इति, अत्रोच्यते, आत्मीयैकप्रदेशव्यतिरिक्तप्रदेशान्तरप्रतिषेधापेक्षा ह्यप्रदेशार्थता, न पुनर्निजैकप्रदेशप्रतिषेधापेक्षापि, धर्म्मिण एवाप्रसङ्गादित्यादिप्रसंगाद् अलं। विस्तरेण 'अवत्तव्वगदव्वाइं पदेसट्ठयाए विसेसाधियाइं' अनानुपूर्वीद्रव्येभ्य इति, अत्र विनेयासंमोहार्थमुदाहरणं-पुव्वीए ममेसं अवत्तव्वगदव्वा कया, अणाणुपुव्विदव्वा पुण दियड्ढसयमेत्तगा, एवं द्रव्यत्वेन विशिष्टविशेषाधिका भवन्ति, पदेसत्तणे पुणा अणाणुपुव्विदव्वा अप्पणो दव्वट्ठयाए तुल्ला चेव, अपदेसत्तणओ, विसिट्ठविसेसाधिता(अवत्तव्वया)दुसयमेत्ता भवंति, आणुपुव्विदव्वाइं अपदेसट्ठताए अणंतगुणाइं, तेहिंतोवि पदेसट्ठताए आणुपुव्विदव्वाइं अणंतगुणाइं, कथं ?, उच्यते, आणुपुव्विदव्वाणं ठाणबहुत्तणओ, तेसिं च संखा अणंतपदेसत्तणओ, उभयार्थता सूत्रसिद्धेय 'से त' मित्यादि निगमनद्वयं, 'से किं त' मित्यादि ( ९०–६९ ) इह सामान्यमात्रसंग्रहणशीलः संग्रहः, शेषं सूत्रसिद्धं यावत् 'तिपदेसिया आणुपुव्वी' त्यादि, इह संग्रहस्य सामान्यमात्रप्रतिपादनपरत्वाद्यावन्तः केचन त्रिप्रदेशिकास्ते त्रिप्रदेशिकत्वसामान्याव्यतिरेकात् व्यतिरेके च त्रिप्रदेशिकत्वानुपपत्तेः सामान्यस्य चैकत्वादेकैव त्रिप्रदेशिकानुपूर्वीति, एवं चतुष्प्रदेशिकादिष्वपि भावनीयं, पुनश्च विशुद्धतरसंग्रहापेक्षया सर्वासामेवानुपूर्वीत्वसामान्यभेदादेकैवानुपूर्वीति, एवमनानुपूर्व्यवक्तव्यकेष्वपि स्वजात्यभेदतो वाच्यमेकत्वमिति 'से त' मित्यादि निगमनं, बहुत्वाभावाद्बहुवचनाभावः 'एताए णं' मित्यादि ( ९२–७० ) पाठसिद्धं, यावत 'अत्थि आणुपुव्वी' त्यादि सप्त भंगाः, व्यक्तिबहुत्वाभावाद्बहुवचनानुपपत्तितः शेषभंगाभाव इति, एवं भंगोपदर्शनायामपि भावनीयं। 'से किं तं

समोतारे ' त्यादि ( ९४–७१ ) सूत्रसिद्धं, यावत् 'संगहस्स आणुपुव्विदव्वाइं आणुपुव्विदव्वेहिं समोतरंति' तज्जातौ वर्त्तन्ते, आनुपूर्वीत्वेन भवन्तीत्यर्थः, एवमनानुपूर्व्यवक्तव्यकद्रव्यचिन्तायामपि भावना कार्या, पाठान्तरं वा ' सट्ठाणे समोतरंति ' स्वस्थानं तस्मिन् समवतरंतीति, अत्राह-जं सट्ठाणे समोतरंतीत्ति भणह, किं तं आतभावो सट्ठाणं परदव्वं वा समभावपरिणामत्तणओ सट्ठाणं ?, जदि आतभावो सट्ठाणं तो आतभावे ठितत्तणतो समोतारो भवति, अह परदव्वं तो आणुपुव्विदव्वस्स अणाणुपुव्विअवत्तव्वगदव्वावि मुत्तित्तवण्णादिएहिं समभावत्तणतो सट्ठाणं भविस्संति, एवं चोदिते गुरू भणति–सव्वदव्वा आतभावेसु वणिज्जमाणा आतभावसमोतारे भवंति, जतो जीवदव्वं जविभावेसु समोतरिज्जइ णोऽजीवभावेसु, अजीवदव्वंपि अजीवभावेसु न जीवभावेष्वित्यर्थः, परदव्वंपि समभावविसेसादिसामन्नत्तणओ सट्ठाणं घेप्पइत्ति ण दोसो, इह पुण अधिकारे आणुपुव्विभावविसेसत्तणओ आणुपुव्विदव्वपक्खे समोतरंतित्ति सट्ठाणं भणितं, एवं अणाणुपुव्विअवत्तव्वेसुवि सट्ठाणे समोतारो भाणियव्वो इति, ' से त ' मित्यादि, निगमनं । ' से किं तं अणुगमे ?, अणुगमे अट्ठविहे पण्णत्ते, तंजहा–' सन्तपद ' गाहा ( *९–७१ ) णवरं अप्पाबहुं णत्थि ' त्ति ( ९५–७१ ) विशेषत इयं च नयान्तराभिप्रायतो व्याख्यातैव, य एवेह विशेषोऽसावेव प्रतिद्वारं प्रतिपाद्यत इति, तत्र ' संगहस्से ' त्यादि, ग्रन्थसिद्धमेव, यावन्नियमा एक्को रासी, एत्थ सुत्तुच्चारणसमणंतरमेव आह चोदकः–णणु दव्वपमाणे वुत्ते असिलिट्ठमुत्तरं, जओ एक्को रासित्ति पमाणं कहियं, जओ बहूणं सालिबीयाणं एक्को रासी भण्णति, एवं बहूणं आणुपुव्विदव्वाणं एक्को रासी भविस्सति, बहू पुण दव्वा पडिवज्जितव्वा, आचार्य आह--एकरासिग्गहणेण बहुसुवि आणुपुव्विदव्वेसु एक्कं चेव आणुपुव्विभावं दंसेति, जहा भूमीसु कठिणमुत्तं, अहवा जहा बहवो परमाणवो खंधत्तभावपरिणता एगखंधो भण्णति, एवं बहुआणुपुव्विदव्वा आणुपुव्विभावपरिणयत्तणतो एगाणुपुव्वित्तं एगत्तणओ एगो रासीति भणितं न दोसो, ' संगहस्स आणु-

पुव्विदव्वाइं लोयस्स किं संखेज्जतिभागे होज्जा ' इत्यादौ निर्वचनसूत्रं ' नियमा सव्वलोए होज्जा ' सामण्णवेक्खाए आणुपुव्वीए पग्गत्तणओ सव्वगयत्तणओ य, एवमणाणुपुव्विअवत्तव्वगावि भाणितव्वा । फुसणावि एवं चेव भाणितव्वा, कालतो पुण सव्वद्धं, आणुपुव्वीसामान्यस्य सर्वकालमेव भावात्, एवमणाणुपुव्विअवत्तव्वगावि भाणियव्वा, अंतरचिन्ताए णत्थि अन्तरं, प्रयोजनमनन्तरोक्तमेव, भागद्वारेऽपि नियमात् त्रिभागो, जेण तिण्णि चेवेत्थ रासी, एत्थ चोदगो भणति–णणु आदीए अवत्तव्वगेहिंतो अणाणुपुव्वी विसेसाधिता तेहिंतो आणुपुव्वी असंखेज्जगुणा, आचार्य आह–तं नेगमववहाराभिप्पायतो, इमं पुण संगहाभिप्पायतो भणितं, किंचान्यत्–जहा एगस्स रण्गो सओ पुत्ता, तेसिं असे मग्गन्ताणं एगस्स एगो आसो दिण्णो, सो छ सहस्से लब्भति, बितियस्स दो आसा दिण्णा, ते तिण्णि तिण्णि सहस्से लब्भंति, तइयस्स बारस आसा दिण्णा, ते पंच पंच सए लब्भंति, विसमावि ते मुल्लभावं पडुच्च तिभागपडिता भवंति, एवं आणुपुव्विमादीवि दव्वा आणुपुव्विअणाणुपुव्विअवत्तव्वगतिभागसमत्तणतो नियमा तिभागोत्ति भणितं ण दोसो, सादिपारिणामिए भावे पूर्ववत्, गता अणोवणिहिया दव्वाणुपुव्वी । ' से किं त ' मित्यादि, अथ कथमौपनिधिकी द्रव्यानुपूर्वी ?, औपनिधिकी द्रव्यानुपूर्वी त्रिविधा प्रज्ञप्ता, तद्यथा–' पूर्वानुपूर्वी ' त्यादि ( ९६–७३ ) तस्मात्प्रथमात्प्रभृति आनुपूर्वी अनुक्रमः परिपाटी पूर्वानुपूर्वी, पाश्चात्यान्–चरमादारभ्य व्यत्ययेनैवानुपूर्वी पश्चानुपूर्वी, न आनुपूर्वी अनानुपूर्वी यथोक्तप्रकारद्वयातिरिक्तरूपेत्यर्थः, ' से किं त ' मित्यादि. ( ९७–७३ ) तत्र द्रव्यानुपूर्व्यधिकारात् धर्मास्तिकायादीनामेव च द्रव्यत्वादिदमाह–' धम्मत्थिकाए ' इत्यादि, तत्र जीवपुद्गलानां स्वाभाविके क्रियावत्त्वे गतिपरिणतानां तत्स्वभावधारणाद्धर्मः, अस्तयः–प्रदेशास्तेषां कायः–संघातः अस्तिकायः धर्मश्चासावस्तिकायश्चेति समासः, तथा जीवपुद्गलानां स्वाभाविके क्रियावत्त्वे तत्परिणतानां तत्स्वभावाधारणादधर्मः, शेषं धर्मास्तिकायवत्, तत्र सर्वद्रव्यस्वभावाऽऽदीपनादाकाशं, स्वभावेनावस्थानादि-

त्यर्थः, आङ्शब्दो मर्यादाभिविधिवाची, मर्यादायामाकाशे भवन्ति भावाः स्वात्मनि च, तत्संयोगेऽपि स्वभाव एवावतिष्ठन्ते नाकाशभावमेव यान्ति, अभिविधौ तु सर्वभावव्यापनादाकाशं, सर्वात्मसंयोगादिति भावः, शेषं धर्मास्तिकायवत्, तथा जीवति जीविष्यति जीवितवान् जीवः, शेषं पूर्ववत्, तथा पूरणगलनधर्माणः पुद्गलाः त एवास्तिकायः पुद्गलास्तिकाय इत्यनेन सावयवानेकप्रदेशिकस्कन्धमहोऽप्यव-गन्तव्यः, तथाऽद्धेत्ययं कालवचनः स एव निरंशत्वादतीतानागतयोर्विनिष्टानुत्पन्नत्वेनासत्त्वात्समयः, समूहाभाव इत्यर्थः, आवलिकादयः मन्वीति चेत्, न, तेषां व्यवहारमात्रतयैव शब्दात्, तथाहि—नानेकपरमाणुनिर्वृत्तस्कन्धसमूहवत् आवलिकादिषु समयसमूह इति। आह—एषां कथमस्तित्वमवगम्यते ? इति, अत्रोच्यते, प्रमाणात्, तच्चेदं प्रमाणं-इह गतिः स्थितिश्च सकललोकप्रसिद्धा कार्यं वर्त्तते, कार्यं च परिणामा-पेक्षाकारणायत्तात्मलाभं वर्त्तते, घटादिकार्येषु तथा दर्शनात्, तथाच मृत्पिण्डभावेऽपि दिग्देशकालाकाशप्रकाशाद्यपेक्षाकारणमन्तरेण न घटो भवति, यदि स्यान्मृत्पिण्डमात्रादेव स्यात्, नच भवति, गतिस्थिती अपि जीवपुद्गलाख्यपारिणामिककारणभावेऽपि न धर्मास्तिकायाख्यापेक्षा-कारणमन्तरेण भवत एव, यतश्च भावो दृश्यते अतस्तत्सत्ता गम्यत इति भावार्थः, गतिपरिणामपरिणतानां जीवपुद्गलानां गत्युपष्टम्भको धर्मास्तिकायः मत्स्यानामिव जलं, तथा स्थितिपरिणामपरिणतानां स्थित्युपष्टम्भकः अधर्मास्तिकायः मत्स्यानामिव मेदिनी, विवक्षया जलं वा, प्रयोगगतिस्थिती अपेक्षाकारणवत्यौ कार्यत्वात् घटवत्, विपक्षस्त्रैलोक्यशुषिरभावो वेत्यलं प्रसंगेन, गमनिकामात्रमेतत्। आह—आकाशा-स्तिकायसत्ता कथमवगम्यते ?, उच्यते, अवगाहदर्शनात्तथा चोक्तं—'अवगाहलक्षणमाकाश'मिति, आह—जीवास्तिकायसत्ता कथमवग-म्यते ?, उच्यते ... त्वात्, पुद्गलास्तिकायसत्ताऽनुमानतः, घटादिकार्योपलब्धेः सांव्यवहारिकप्रत्यक्षतश्चेति, आह—कालस ... म्रकाशोकादिपुष्पफलप्रदानस्य नियमेन दर्शनात्, नियामकश्च काल इति, आह—पूर्वानुपूर्वी-

त्वमभीप्सितमेव किं कृतमिति ?, अत्रोच्यते, इत्थमेवोपन्यासपृच्छे:, आह-इत्थमेव क्रमेण धर्मास्तिकायाद्युपन्यास एव किमर्थमिति ?, उच्यते, धर्मास्तिकायादिपदस्य मांगलिकत्वाद्धर्मास्तिकायस्य प्रथममुपन्यासः गतिक्रियाहेतुत्वाच्च, पुनर्धर्मास्तिकायप्रतिपक्षत्वादधर्मास्तिकायस्य, पुनस्तदाधारत्वादाकाशास्तिकायस्य, पुनः प्रकृत्याऽमूर्त्तसाम्याज्जीवास्तिकायस्य, पुनस्तदुपयोगित्वात्पुद्गलास्तिकायस्य, पुनर्जीवाजीवपर्यायत्वादद्धासमयस्येति, 'से किं तं पच्छाणुपुव्वी' त्यादि, पश्चात् प्रभृति प्रतिलोमपरिपाटी पश्चानुपूर्वी, उदाहरणमुत्क्रमेणेदमेव अद्धासमय इत्यादि, निगदसिद्धं, 'से किं तं अणाणुपुव्वी' त्यादि, न आनुपूर्वी अनानुपूर्वी यत्रायं द्विप्रकारोऽपि क्रमो नास्ति, एवमेवादर्शितर्दतया विपदयत इत्यर्थः, तथा चाह-'एयाए चेव' त्ति 'एते छच्च समाणे' इति वचनादस्यामेवानन्तराधिकृतायां 'एगादियाए' त्ति एकादिकायां 'एगुत्तरियाए' त्ति एकोत्तरायां 'छगच्छगते'त्ति षण्णां गच्छः समुदायः षड्गच्छः तं गता-प्राप्ता षड्गच्छगता तस्यां 'सेढीए' त्ति श्रेण्यां, किं ?-'अण्णमन्नब्भासो' त्ति अन्योऽन्यमभ्यासोऽन्योऽन्याभ्यासः, अभ्यासो गुणनेत्यनर्थान्तरं, 'दुरूवूणो' त्ति द्विरूपन्यूनः, आद्यन्तरूपरहितोऽनानुपूर्वीति संटङ्कः, एष तावदक्षरार्थः, भावार्थस्तु करणगाथानुसारतोऽवगन्तव्यः, सा चेयं गाथा-'पुव्वाणुपुव्वि हेट्ठा समयाभेदेण कुण जहाजेट्ठं । उवरिमतुल्लं पुरओ णसेज्ज पुव्वक्कमो सेसे ॥ १ ॥' त्ति, पुव्वाणपुव्विसहस्थो पुव्वं वण्णितो, हेट्ठत्ति पढमाए पुव्वाणुपुव्विलताए अधोभागे रयणं बितियादिलतादिसु 'समउ' त्ति इह अणाणुपुव्विभंगरयणव्यवस्था समयः तं 'अभिन्दमाणो' त्ति तां भंगरचनाव्यवस्थां अविणासेमाणो, तस्स य विणासो जति सरिसमंकं लताए ठवेति, जति वाऽभिहितलक्षणतो उक्कमेणं ठवेइ तो भिण्णो समओ, उक्तंच-" जहियंमि उ निक्खित्ते पुणरवि सो चेव होइ दायव्वो । सो होति समयभेओ वज्जेयव्वो पयत्तेणं ॥ १ ॥" तं भेदं अवचमाणो कुणसु 'जहाजेट्ठ' न्ति जो जस्स आदी एस तस्स जेट्ठो हवति, जहा दुगस्स एक्को जेट्ठो, अणुजेट्ठो जहा तिगस्स एक्को,

जेट्ठाणुजेट्ठो जधा चउक्कस्स एक्को, अतो परं सव्वे जेट्ठाणुजेट्ठा भाणितव्वा, एतेसिं अण्णतरे ठविते ' पुरओ ' त्ति अग्गओ उवरिल्लतासरिसे अंके ठवेज्जा, जेट्ठादिअंकठवणतो जे एगादिया सेसट्ठाणा तेसु जे अट्ठविया सेसगा अंका ते पुव्वक्कमेण ठवेज्जा, जस्स अणंतरो परंपरो वा पुव्वो अंको स पुव्वं ठविज्जते पुव्वक्कमो भण्णतीत्यर्थः, तत्थ तिण्हं पदाणं इमा ठवणा, १२३–२१३–१३२–३१२–२३१–३२१ अहवा अणाणुपुव्वीणं परिमाणजाणणत्थो सुहविण्णेयो इमो उवाओ धम्मादिए चेव छप्पदे पडुच्च दंसिज्जइ–एगादिएसु परोप्परब्भासेण सत्त सता वीसुत्तरा भवंति, एक्केण दुगो गुणिओ दो दो तिग छ छ चउक्क चउव्वीसं चउवीसं पंच वीसुत्तरं सतं वीसुत्तरं सतं छक्कगाण सत्त सता वीसुत्तरा, एते पढमंतिमहीणा अणाणुपुव्वीण सत्त सता अट्ठारसुत्तरा हवंति, अगेण उवातो भणिओ चेव ' पुव्वाणुपुव्वी हेट्ठा ' इत्यादिना, एवमन्येऽपि भूयांस एवोपाया विद्यन्ते न च तैरप्रस्तुतैरिहाधिकार इति न दर्श्यन्ते, से तं अणाणुपुव्वीति निगमनं, ' अहवे ' त्यादि ( ९८–७७ ) अहवेति प्रकारान्तरदर्शनार्थः, औपनिधिकी द्रव्यानुपूर्वी त्रिविधा प्रज्ञप्ता, तद्यथा–' पूर्वानुपूर्वी ' त्यादि सूत्रसिद्धं यावन्निगमनमिति, नवरमाह चोदकः–अथ कस्मात्पुद्गलास्तिकाये एव त्रिविधा दर्शिता, न शेषास्तिकायेषु धर्मादिष्विति, अत्रोच्यते, असंभवाद्, असंभवश्च धर्माधर्माकाशानां प्रत्येकमेकद्रव्यत्वादेकद्रव्येषु च पूर्वाद्ययोगात् जीवास्तिकायेऽपि सर्वजीवानामेव तुल्यप्रदेशत्वादेकाद्येकोत्तरवृद्ध्यभावाद्यो न इति, अद्धासमयस्त्वेकत्वादयोग इत्यलं प्रसङ्गेन, प्रस्तुमः प्रकृतं, गता द्रव्यानुपूर्वी । साम्प्रतं क्षेत्रानुपूर्वी प्रतिपाद्यते, तत्रेदं सूत्रं–' से किं तं खेत्ताणुपुव्वी ' ( ९९–७८ ) द्रव्यावगाहोपलक्षितं क्षेत्रमेव क्षेत्रानुपूर्वी, सा द्विविधा प्रज्ञप्तेत्यादात्र यथा द्रव्यानुपूर्वी तथैवाक्षरगमनिका कार्या, विशेषं तु वक्ष्यामः, ' तिपदेसोगाढे आणुपुव्वि ' त्ति त्रिप्रदेशावगाढः त्र्यणुकादिस्कन्धः अवगाह्यावगाहकयोरन्योऽन्यसिद्धेरभावेऽप्याकाशस्यावगाहलक्षणत्वात् क्षेत्रानुपूर्व्यधिकारात् क्षेत्रप्राधान्यात् क्षेत्रानुपूर्वी-

ति, एवं यावदसंख्येयप्रदेशावगाढोऽनन्तप्रदेशिकादिरानुपूर्वीति, ‘ एगपदेसावगाढोऽणाणुपुव्वि ’ त्ति एकप्रदेशावगाढः परमाणुः यावद्-
नन्ताणुकस्कन्धो वाऽनानुपूर्वी, ‘ दुपदेसोगाढे अवत्तव्वए ’ द्विप्रदेशावगाढो द्व्यणुकादिरवक्तव्यकं, एत्थावगाहो दव्वाणं इमेण
विहिणा—अणाणुपुव्विदव्वाणं परमाणूणं नियमा एगम्मि चेव पदेसेऽवगाहो भवति, अवत्तव्वयदव्वाणं पुण दोपदेसियाणं एगम्मि भा
होतु वा, आणुपुव्विदव्वाणं पुण तिपदेसिगादीणं जहण्णेणं एगम्मि पदेसे उक्कोसेणं पुण जो खंधो जत्तिएहिं परमाणूहिं णिप्फण्णो सो तत्तिएहिं
चेव पएसेहिं ओगाहति, एवं जाव संखेज्जासंखेज्जपदेसिओ, अणंतपदेसिओ पुण खंधो एगपदेसाढ्ढो एगपदेसुत्तरवुड्डीए उक्कोसओ जाव
असंखेज्जेसु पदेसेसु ओगाहति, नानन्तेषु, लोकाकाशस्यासंख्येयप्रदेशात्मकत्वात्परतश्चावगाहनाऽयोगादित्यलं प्रसंगेन, शेषं सूत्रसिद्धं यावत्
णेगमववहाराणं आणुपुव्विदव्वाइं किं संखेज्जाइं असंखेज्जाइं अणंताइं?, नेगमवव० आणु० नो संखेज्जाइं असंखेज्जाइं नो अणंताइं, एवं
अणाणुपुव्विदव्वाणिवि, तत्र असंख्येयानि क्षेत्रप्राधान्यात् द्रव्यावगाहक्षेत्रस्यासंख्येयप्रदेशात्मकत्वात्तुल्यप्रदेशावगाढानां च द्रव्यतया बहूनामप्ये-
कत्वादिति । क्षेत्रद्वारे निर्वचनसूत्रं—‘एगं दव्वं पडुच्च लोगस्स संखेज्जतिभागे वा होज्जे ’ त्यादि, तथाविधस्कन्धसद्भावात्, एवं शेषेष्वपि
भावनीयं, यावद् ‘ देसूणे वा लोए होज्ज ’ त्ति आह-अचित्तमहास्कन्धस्य सकललोकव्यापित्वात्क्षेत्रप्राधान्यविवक्षायामपि कस्मात्संपूर्ण एव लोको
नोच्यते? इति, उच्यते, सदैवानानुपूर्व्यवक्तव्यकद्रव्यसद्भावात् जघन्यतोऽपि तत्प्रदेशत्रयेणोनत्वात् व्याप्तौ सत्यामपि तत्प्रदेशेष्वानुपूर्व्याः प्राधा-
न्याभावात्, उक्तं च पूर्वमुनिभिः—“ महखंधापुण्णेवी अवत्तव्वगऽणाणुपुव्विदव्वाइं । जंदेसोगाढाइं तद्देसेणं स लोगोणो ॥ १ ॥ ण य तस्य
तस्स जुज्जइ पाधण्णं वावि तिवि ( तंमि ) देसंमि । तप्पाधन्नत्तणओ इहराऽभावो भवे तासिं ॥ २ ॥ ” अधिकृतानुपूर्वीस्कन्धप्रदेशकल्प-
नातो वा देशोन एव लोक इति, यथोक्तमजीवप्रज्ञापनायां—“ धम्मत्थिकाए धम्मत्थिकायस्स देसो धम्मत्थिकायस्स पदेसे, एवमधम्मागासे,

पुग्गलेसुवि " इह चावयवावयविरूपत्वाद्वस्तुनः अवयवावयविनोश्च कथंचिद्भेदाद्देशप्रदेशकल्पना साध्वीति, न च देश एव देसी सर्वथा, तदेकत्वे देशमात्र एवासौ स्याद्देशो वा देशिमात्र इति, अतः स्वदेशस्यैव कथंचिदन्यत्वाद्देशोनो लोक इति । किंच–खेत्ताणुपुव्वीए आणुपुव्वीअवत्तव्वगदव्वविभागत्तणओ ण तेसिं परोप्परमवगाहो, परिणमंति वा, ण वा तेसिं खंधभावो अत्थि, कथं?, उच्यते, पदेसाण अचलभावत्तणओ, तो य अपरिणामत्तणओ, तेसिं च भावप्पमाणनिच्चत्तणओ, अतो खेत्ताणुपुव्वीए एगं दव्वं पडुच्च देसूणे लोगोत्ति भणियं, दव्वाणुपुव्वीए पुण दव्वाण एगपदेसावगाहत्तणओ एगावगाढेऽवि दव्वाण आयभावेणं भिन्नत्तणओ परिणामत्तणओ खंधभावपरिणामत्तणओ य, अतो गं दव्वं पडुच्च सव्वलोगोत्ति, भणितं च-" कह णवि दविए चेऽवेवं खंधे सविवक्खया पिधत्तेणं । दव्वाणुपुव्विताइं परिणामइ खंधभावेण ॥ १ ॥" ोच्यते, बादरपरिणामेसु आनुपुव्विदव्वपरिणामो चेव भवति, नो अणाणुपुव्विअवत्तव्वगदव्वेणं, जओ बादरपरिणामो खंधभावे एव भवति, से ण सुहुमा ते तिविहावि अत्थि, किंच–जया अचित्तमहाखंधपरिणामो भवति तदा ते सव्वे सुहुमा आयभावपरिणामं अमुंचमाणा तत्परिणता वंति, तस्स सुहुमत्तणओ सव्वगतत्तणओ य, कथमेवं ?, उच्यते, छायातपोद्योतबादरपुद्गलपरिणामवत्, स्फटिककृष्णादिवर्णोपरंजितवत्, ीसो पुच्छइ-दव्वाणुपुव्विए एगदव्वं सव्वलोगावगाढंति, कहं पुण महं एवगं वा भवति ?, उच्यते, केवलिसमुद्घातवत्, उक्तं च-"केवलिउयाओ इव समयट्ठम पूर रेयावि य लोये । अच्चित्तमहाखंधो वेला इव अतर णियतो य ॥ १ ॥" अचित्तमहाखंधो सलोगमेत्तो वीससापरितो भवति, तिरियमसंखेज्जजोयणप्पमाणो अणियतकालठीती वट्टो उड्डमहो चोद्दसरज्जुप्पमाणो सुहुमपोग्गलपरिणामपरिणओ पढमसमए डो भवति बितिए कवाडं तइए मंथं करेइ चउत्थे लोगपूरणं पंचमादिसमएसु पडिलोमं संहारेण अट्ठसमयंते सव्वहा तस्स खंधओ विणासो, स जलनिहिवेला इव लोगपूरणरेयकरणेण ठितो लोगपुग्गलाणुभावो, सव्वण्णुवयणतो सद्देतो इत्यलं प्रसंगेन । ' णाणादव्वाइं पडुच्च णियमा

सव्वलोएवी ' त्यादि (१०१-७०), अस्य भावना-त्र्यादिप्रदेशावगाढैर्द्रव्यभेदैः सकललोकस्यैव व्याप्तत्वादिति । अनानुपूर्व्यालोचनायां त्वेकं द्रव्यं प्रतीत्य असंख्येयभाग एव, तस्य नियमत एवैकप्रदेशावगाढत्वात्, णाणादव्वाइं पडुच्च णियमा सव्वलोएत्ति. विशिष्टैकपरिणामवद्भिः -प्रत्येकप्रदेशावगाढैरपि समग्रलोकव्याप्तः, आधेयभेदेन चाधारभेदोपपत्तेः, वस्तुनश्चानन्तधर्मात्मकत्वात्तत्सहकारिकारणसन्निधाने सति तस्य २ धर्मस्याभिव्यक्तेः, धर्मिभेदेन च क्षेत्रप्रदेशाविशेषेऽप्यानुपूर्वीतराभिधानप्रवृत्तेरपि सूक्ष्मधिया भावनीयं । एवं अवत्तव्वगदव्वाणिवि, भावार्थ उक्त एव, नवरमवक्तव्यकैकद्रव्यं द्विप्रदेशावगाढं भवति, स्पर्शनायां तु यथाऽऽकाशप्रदेशानामेव स्पर्शना, ततः खल्वानुपूर्व्यादिद्रव्याधारत्वादिष्टानामेव पङ्क्तिकास्थितानंतरप्रदेशैरेव सह वाऽवगन्तव्या, इह पुनः किल सूत्राभिप्रायो यथाऽऽकाशप्रदेशावगाढस्य द्रव्यस्यैवं चिन्तनीयेति वृद्धा व्याचक्षते, भावार्थस्त्वनंतरद्वारानुसारतो भावनीय इति । कालचिंतायामपि यथाकाशप्रदेशानामेव कालश्चिन्त्यते तत्रः किल नभःप्रदेशानामनाद्यपर्यवसितत्वात् स एव वक्तव्यः, सूत्राभिप्रायस्त्वानुपूर्व्यादिद्रव्याणामेवावगाहस्थितिकालश्चिन्त्यते इत्येके, न चेह क्षेत्रखंडानामपि विशिष्टपरिणामपरिणताधेयद्रव्याधारभावोऽपि चिन्त्यमानो विरुध्यत इति, युक्तिपतितश्चायमेव, क्षेत्रानुपूर्व्यधिकारादिति, तत्र 'एगं दव्वं पडुच्च जहन्नेणं एकं समय ' मित्यादि, अस्य भावना-द्विप्रदेशावगाढं सदन्यसन्निपाते त्रिप्रदेशावगाढं भूत्वा समयानंतरमेव पुनर्द्विप्रदेशावगाढमेव भवति, उत्कृष्टतस्त्वसंख्येयं कालं भूत्वेति, आधेयभेदाच्चेहाधारभेदो भावनीय इति, शेषं भावितार्थं ॥ अन्तरचैता प्रकटार्था, नवरमुत्कृष्टतः असंख्येयं कालं, नानन्तं यथाऽनानुपूर्व्यामिति, कस्मात् ?, सर्वपुद्गलानामवगाहक्षेत्रस्य स्थितिकालस्य चासंख्येयत्वात्, क्षेत्रानुपूर्व्यधिकारस्य व्याख्येयत्वात्, क्षेत्रानुपूर्व्यधिकारे च क्षेत्रप्राधान्याद्, असंख्येयकालादारतश्च पुनस्तत्प्रदेशानां तथाविधाधेयविन तथाभूताधारपरिणामभावादित्यतिगहनमेतदवहितैर्भावनीयमिति ॥ भागचिन्तायामानुपूर्वीद्रव्याणि शेषद्रव्येभ्योऽसंख्येयेषु भागेष्वि-

त्युक्तं, अत्रैके व्याचक्षते-यदा यदा सप्रदेशानुपुव्विमादि चिंतिज्जति तदा तदा पण्णवणाभिप्पायपरिकप्पणाए समूणातिरित्तभागो भाणितव्वो, जया पुण अवगाहिदव्वा तदा संखेज्जेसु भागेसुत्ति, जहा दव्वाणुपुव्वीए तहा भाणितव्वं, तत्र विनेयजनानुग्रहार्थं क्षेत्रानुपूर्व्या एव प्रक्रान्तत्वात् द्रव्यानुपूर्व्यास्तूपाधित्वेन गुणीभूतत्वात् क्षेत्रानुपूर्वीमेवाधिकृत्य प्रज्ञापनाभिप्रायः प्रतिपाद्यते-तत्रानुपूर्वीद्रव्याणि शेषद्रव्येभ्योऽसंख्येयभागैरधिकानीति वाक्यशेषः, इत्थं चैतदंगीकर्त्तव्यं, यस्मादनानुपूर्व्यवक्तव्यकद्रव्याणि तेभ्योऽसंख्येयभागैरधिकानीति, क्षेत्रानुपूर्व्यधिकारात् क्षेत्रखण्डान्यधिकृत्येयमालोचना, ततः खल्वानुपूर्व्यादिद्रव्याधारलोकक्षेत्रस्य चतुर्दशरज्ज्वात्मकत्वेन तुल्यत्वात्तदंतर्गतप्रदेशानां च सर्वेषामेवानुपूर्व्यादिभिर्द्र (व्यैर्व्याप्तत्वात् समत्वं द्र) व्याधारलोकक्षेत्रस्य प्रत्युत त्र्यादिप्रदेशसमुदायेष्वाकाशखण्डेषु प्रतिखण्डमेकैकानुपूर्वीगणनावानुपूर्वीणामेवाल्पता युक्तिमती, अवक्तव्यानानुपूर्वीणां तु द्विप्रदेशैकैकप्रदेशिकसं[?]नां गणनात् बहुता, तत्किमर्थं विपर्यय इति?, अत्रोच्यते, इह त्र्यादिप्रदेशाधेयपरिणामद्रव्याधारत्वेन क्षेत्रानुपूर्व्योऽभिधीयंते, तत्र त्रिप्रदेशाभिधेयपरिणामवंत्यनंतान्यपि द्रव्याणि विशिष्टैकत्रिप्रदेशसमुदायलक्षणक्षेत्रव्यवस्थितान्येकैका क्षेत्रानुपूर्वी, एवं चतुःप्रदेशेष्वाधेयपरिणामवंत्यपि असंख्येयप्रदेशाधेयपरिणामवत्पर्यंतानि विशिष्टैकचतुःप्रदेशादसंख्येयप्रदेशान्तसमुदायलक्षणक्षेत्रव्यवस्थितानि प्रतिभेदमेकैकैवेति, किन्तु यदेकं त्रिप्रदेशसमुदायलक्षणमानुपूर्वीव्यपदेशार्हं क्षेत्रं तदेव तदन्यानंतचतुःप्रदेशाद्याधेयपरिणामवद्द्रव्याध्यासितमेकैकक्षेत्रप्रदेशवृद्ध्या परिणामभेदतो भेदेनानुपूर्वीव्यपदेशमर्हति, असंख्येयाश्च प्रभेदकारिणः क्षेत्रप्रदेशा इति, न चायमवक्तव्यकानानुपूर्वीणां न्यायः संभवति, नियतप्रदेशात्मकत्वादतोऽसंख्येयभागैरधिकानीति स्थितं, न च तज्ञेनैव स्वभावेन त्रिप्रदेशाधेयपरिणामवतां द्रव्याणामाधारता प्रतिपद्यते, नैव चतुःप्रदेशाद्याधेयपरिणामवतामपि, तेषामपि त्रिप्रदेशाधेयपरिणामोपपत्तेः विपर्ययो वा, तदेवमनन्तधर्मात्मके वस्तुनि सति विवक्षितेतरधर्मप्रधानोपसर्जनद्वारेणाखिलमिह भावनीयमित्यलं

प्रसंगेन । भावचिन्तायामानुपूर्वीद्रव्याणि नियमात् सादिपारणामिके भावे, विशिष्टाधेयाधारभावस्य सादिपारिणामिकात्मकत्वाद् , एवमनानुपूर्वीअवक्तव्यकान्यपि, अल्पबहुत्वचिन्तायां द्रव्यार्थतां प्रत्यानुपूर्वीणामेकैकगणनं, प्रदेशार्थतां तु भेदेन तद्गतप्रदेशगणनं, द्रव्यार्थप्रदेशार्थतां तूभयगणनं, तत्र सव्वत्थोवाइं णेगमववहाराणं अवत्तव्वगदव्वाइं दव्वट्ठयाए, कथं ?, द्विप्रदेशात्मकत्वादवक्तव्यकद्रव्याणामिति, अणाणुपुव्विदव्वाइं दव्वट्ठयाए विसेसाधियाइं, कथं ?, एकप्रदेशात्मकत्वादनानुपूर्वीणां इति, आह- यद्येवं कस्माद् द्विगुणान्येव न भवंत्येकप्रदेशात्मकत्वात् तद्द्विगुणत्वभावादिति, अत्रोच्यते, तदन्यसंयोगतोऽवधीकृतावक्तव्यकबाहुल्याच्च नाधिकृतद्रव्याणि द्विगुणानि, किंतु विशेषाधिकान्येव, 'आणुपुव्वीदव्वाइं दव्वट्ठयाए असंखेज्जगुणाइं' अत्र भावना प्रतिपादितैव, 'पदेसट्ठयाए सव्वत्थोवाइं णेगमववहाराणं अणाणुपुव्विदव्वाइं' ति प्रकटार्थं, 'अवत्तव्वगदव्वाइं पदेसट्ठयाए विसेसाधिताइं' अस्य भावार्थः--इह खलु रुचकादारभ्य क्षेत्रप्रदेशात्मकत्वादवक्तव्यकश्रेणिव्यतिरिक्ततदन्यप्रदेशासंसर्गनिष्पन्नावक्तव्यकगणनया तथा लोकनिष्कुटगतप्रदेशावक्तव्यकायोग्यानानुपूर्वीयोग्यभावतश्चेति सूक्ष्मबुद्ध्या भावनीय इति । [illegible] विनेयजनानुग्रहार्थं स्थापना लिख्यते, शेषं भावितार्थं यावत् 'सेत्तं णेगमववहाराणं अणोवणिहिया खेत्ताणुपुव्वी' सेयं नैगमव्यवहारयोरनौपनिधिकी क्षेत्रानुपूर्वी । 'से किं तं संगहस्से' त्यादि ( १०२-८७ ) इयमानिगमनं द्रव्यानुपूर्व्यनुसारतो भावनीया, नवरमत्र क्षेत्रस्य प्राधान्यमिति । औपनिधिक्यपि प्रायो निगदसिद्धैव, णवरं पंचत्थिकायमइओ लोगो, सो आयामओ उड्ढमहे पतिट्ठिओ, तस्स विहा परिकप्पणा इमेण विहिणा-बहुसमभूमिभागा रयणप्पभाभागे मेरुमज्झे अट्ठपदेसो रुयगो, तस्स अहोपयराओ अहेण जाव णव योजणशतानि तिरियलोगो, ततो परेण अहे ठितत्तणओ अहोलोगो साहियसत्तरज्जुप्पमाणो, रुयगाओ उपरिहुत्तो णव जोयणसताणि जाव जोइसचक्कस्स उवरितलो ताव तिरियलोगो, तओ उड्ढलोगठितत्तणओ उवरिं उड्ढलोगो देसूणसत्तरज्जुप्पमाणो, अहोलोगउड्ढलोगाण मज्झे अट्ठारसजोयण-

त्वरं यावत्कथिकं च, तत्र स्वल्पकालमित्वरं, तदाद्यचरमार्हत्तीर्थयोरेवानारोपितव्रतस्य शैक्षकस्य, यावत्कथाऽऽत्मनः तावत्कालं यावत्कथं, जाव-ज्जीवमित्यर्थः, यावत्कथमेव यावत्कथिकं तन्मध्यमार्हत्तीर्थेषु विदेहवासिनां चेति। तथा छेदोपस्थापनम्, इह यत्र पूर्वपर्यायस्य छेदो महाव्रतेषु चोपस्थापनमात्मनः, तच्छेदोपस्थापनमुच्यते, तच्च सातिचारं निरतिचारं च, तत्र निरतिचारमित्वरसामायिकस्य शैक्षकस्य यदारोप्यते, यद्वा तीर्थान्तरप्रतिपत्तौ, यथा पार्श्वस्वामितीर्थाद्वर्द्धमानतीर्थं संक्रामतः, मूलघातिनो यत्पुनर्व्रतारोपणं तत्सातिचारम्, उभयं चैतदवस्थितकल्पे, नेतर-स्मिन्। तथा परिहारः-तपोविशेषस्तेन विशुद्धं परिहारविशुद्धं, परिहारो वा विशेषेण शुद्धो यत्र तत् परिहारविशुद्धं, परिहारविशुद्धिकं चेति स्वार्थप्रत्ययोपादानात्, तदपि द्विधा-निर्विशमानकं निर्विष्टः कायो यैस्ते निर्विष्टकायाः स्वार्थिकप्रत्ययोपादानान्निर्विष्टकायिकाः, तस्य वोढारः पारिहारिकाश्चत्वारः चत्वारोऽनुपारिहारिकाः कल्पस्थितश्चेति नवको गणः, तत्र पारिहारिकाणां निर्विशमानकं, अनुपारिहारिकाणां भजनया, निर्विष्टकायिकानां कल्पस्थितस्य च, परिहारकाणां परिहारो जघन्यादि चतुर्थादि त्रिविधं तपः ग्रीष्मशिशिरवर्षासु यथासंख्यं, जघन्यं चतुर्थं षष्ठमष्टमं च मध्यमं षष्ठमष्टमं दशमं च उत्कृष्टमष्टमं दशमं द्वादशं च, शेषाः पंचापि नियतभक्ताः प्रायेण, न तेषामुपवस्तव्यमिति नियमः, भक्तं च सर्वेषामाचाम्लमेव, नान्यत्, एवं पारिहारिकाणां षण्मासं तपः तत्प्रतिचरणं चानुपारिहारिकाणां, ततः पुनरितरेषां षण्मासं तपः, प्रति-चरणं चेतरेषां, निर्विष्टकायानामित्यर्थः, कल्पस्थितस्यापि षण्मासं, इत्येवं मासैरष्टादशभिरेष कल्पः परिसमापितो भवति, कल्पपरिसमाप्तौ च त्रयी गतिरेषां-भूयस्तमेव कल्पं प्रतिपद्येरन् जिनकल्पं वा गणं वा प्रति गच्छेयुः; स्थितकल्पे चैते पुरुषयुगद्वयं भवेयुर्नेतरत्रेति। तथा सूक्ष्मसं-परायं, संपर्येति संसारमेभिरिति संपरायाः-क्रोधादयः, लोभांशावशेषतया सूक्ष्मः संपरायो यत्रेति सूक्ष्मसंपरायः; इदमपि संक्लिश्यमानक-

विशुध्यमानकभेदाद् द्विधैव, तत्र श्रेणिमारोहतो विशुध्यमानकमुच्यते, ततः प्रच्यवमानस्य संक्लिश्यमानकमिति, तथा अथाख्यातं, अथेत्यव्ययं याथातथ्ये, आङभिविधौ, याथातथ्येनाभिविधिना वा ख्यातं, तदेतद् गुणप्रमाणं ।

'से किं तं णयप्पमाणे' इत्यादि ( १४५-२२२ ) वस्तुनोऽनेकधर्मिण एकेन धर्मेण नयनं नयः स एव प्रमाणमित्यादि पूर्ववत्, त्रिविधं प्रज्ञप्तमित्यत्र नैगमादिभेदाश्रयाः, ओघतो दृष्टान्तापेक्षया त्रिविधमेतदिति, तथा चाह-तद्यथा प्रस्थकदृष्टान्तेन, तद्यथा नाम कश्चित्पुरुषः परशुं कुठारं गृहीत्वा प्रस्थककाष्ठायाटवीमुखो गच्छेज्जा-यायात्, तं च कश्चित्तथाविधो दृष्ट्वा वदेत्-अभिदधीत-क्व भवान् गच्छति ?, तत्रैव नयमतान्युच्यन्ते, तत्राऽनेकगमो नैगम इतिकृत्वाऽऽह-अविशुद्धो नैगमो भणति-अभिधत्ते-प्रस्थकस्य गच्छामि, कारणे कार्योपचारात्, तथा व्यवहारदर्शनात्, तं च कश्चिच्छिंदन्तं, वृक्षं इति गम्यते, पश्येत्-उपलभेत, दृष्ट्वा च वदेत्-किं भवान् छिनत्ति?, विशुद्धतरो नैगमो भणति-प्रस्थकं छिनद्मि, भावना प्राग्वत्, एवं तक्षन्तं-तनूकुर्वन्तं वेधनकेन विकिरन्तं लिखन्तं-लेखन्या मृष्टकं कुर्वाणं एवमेव-अनेन प्रकारेण विशुद्धतरस्य नैगमस्य नामाउडियत्ति-नामाङ्कितः प्रस्थक इति, एवमेव व्यवहारस्यापि, लोकव्यवहारपरत्वात्तस्य चोक्तवद्विचित्रत्वादिति, 'संग्रहस्ये' त्यादि, सामान्यमात्रग्राही संग्रहः चितो-धान्येन व्याप्तः, स च देशतोऽपि भवत्यत आह-मितः-पूरितः, अनेनैव प्रकारेण मेयं समारूढं यस्मिन्नाहिताग्न्याकृतिगणत्वात् तत्र वा ग्रहणान्मेयसमारूढः, धान्यसमारूढ इत्यन्ये, प्रस्थक इत्यन्ये, अयमत्र भावार्थः-प्रस्थकस्य मानार्थत्वाच्छेदावस्थासु च तदभावाद्यथोक्त एव प्रस्थकः इति, असावपि तत्सामान्यव्यतिरेकेण तद्विशेषाभावादेक एव, ऋजु वर्त्तमानसमयाभ्युपगमादतीतानागतयोर्विनष्टानुत्पन्नत्वेनाकुटिलं सूत्रयति ऋजुसूत्रस्तस्य निष्फण्णस्वरूपार्थक्रियाहेतुः प्रस्थकोऽपि प्रस्थको वर्त्तमानस्तस्मिन्नेव मानादि प्रस्थकस्तथा प्रतीतेः-प्रस्थकोऽयमिति व्यवहारदर्शनात्, नह्यतीतेनानुत्पन्नेन वा मानेन मेयेन वार्थसिद्धिरित्यतो मानमेये वर्त्तमान एव प्रस्थक इति हृदयं, त्रयाणां शब्दनयाना-

मित्यादि, शब्दप्रधानत्वात् शब्दादयः शब्दनयाः, शब्दमर्थेऽन्यथावस्थितं नेच्छन्ति, शब्देनार्थं गमयन्तीत्यर्थः, आद्यास्तु अर्थप्रधानत्वादर्थनयाः, यथाकथंचिच्छब्देनार्थोऽभिधीयते इति, अर्थेन शब्दं गमयन्तीति, अतोऽन्वर्थप्रधानत्वात् त्रयाणां शब्दसमभिरूढैवम्भूतानां प्रस्थकार्थाधिकारज्ञः प्रस्थकः, तदव्यतिरिक्तो ज्ञाता तल्लक्षण एव गृह्यते, भावप्रधानत्वाच्छब्दादिनयानां, यस्य वा बलेन प्रस्थको निष्पद्यते इति, स चापि प्रस्थकज्ञानोपयोगमन्तरेण न निष्पद्यत इत्यतोऽपि तज्ज्ञोपयोग एव परमार्थतः प्रस्थकमिति च, अमीषां च सर्ववस्तु स्वात्मनि वर्त्तते नान्यत्र, यथा जीवे चेतना, मेयस्य मूर्त्तत्वादाधाराधेययोरनर्थान्तरत्वाद्, अर्थान्तरत्वे देशादिविकल्पैर्वृत्त्ययोगात्, प्रस्थकश्च नियमेन ज्ञानं तत्कथं काष्ठभाजने वर्त्तेत ?, समानाधिकरणस्यैवाभावादतः प्रस्थको मानमिति चस्त्वसंक्रमादप्रयोग इत्योघयुक्तिर्विशेषयुक्तिस्तु प्रतीततन्मतानुसारतो वाच्येति, तदेतत्प्रस्थकदृष्टान्तेन। से किं तं वसहिदृष्टान्तेन, तद्यथा नाम कश्चित्पुरुषं पाटलीपुत्रादौ वसंतं कश्चित्पुरुषो वदेत्-क्व भवान् वसतीति, अत्रैव नयमतान्युच्यन्ते, तत्र विशुद्धो नैगमो भणति-लोके वसामि, तन्निवासक्षेत्रस्यापि चतुर्दशरज्ज्वात्मकत्वाल्लोकादनर्थान्तरत्वात् ( लोकवास )-व्यवहारदर्शनात्, एवं तिर्यग्लोकजम्बूद्वीपभारतवर्षदक्षिणार्द्धभरतपाटलिपुत्रदेवदत्तगृहगर्भगृहेष्वपि भावनीयं, एवमुत्तरोत्तरभेदापेक्षया विशुद्धतरस्य नैगमस्य वसन् वसति, तत्र तिष्ठतीत्यर्थः, एवमेव व्यवहारस्यापि, लोकव्यवहारपरत्वात्, लोके च नेह वसति प्रोषित इति व्यवहारदर्शनात्, संग्रहस्य तिष्ठन्नपि संस्तारकोपगतः-संस्तारकारूढः शयनक्रियावान् वसति, स च नयनिरुक्तिगम्य एक एव, ऋजुसूत्रस्य येष्वाकाशप्रदेशेष्ववगाढस्तेषु वसति, संस्तारकादिप्रदेशानां तदणुभिरेव व्याप्तत्वात् तत्रावस्थानादिकमुक्तं, अन्वर्थपरिप्रापितत्वं च पूर्ववत्, त्रयाणां शब्दनयानामात्मनो भावे वसति, स्वस्वभावाऽनपोहेनैव तत्र वृत्तिकल्पनात् तदपोहे त्वेतस्यावस्तुत्वप्रसंगादिति, तदेतत् वसतिदृष्टान्तेन ॥ ' से किं तं' मित्यादि, अथ किं तत्प्रदेशदृष्टान्तेन?, प्रकृष्टो देशः प्रदेशः, निर्विभागो भाग इत्यर्थः, स एव दृष्टान्तस्तेन, नयमतानि चिन्त्यन्ते, तत्र

नैगमो भणति-पण्णां प्रदेशः, तद्यथा-धर्मप्रदेशः, अत्र धर्मशब्देन धर्मास्तिकायः परिगृह्यते तस्य प्रदेशो धर्मप्रदेशः, एवमधर्मादिष्वपि योज्यं, यावद् देशप्रदेश इत्यत्र देशो द्व्यादिभागस्तस्य प्रदेश इति, सर्वत्र षष्ठीतत्पुरुषसमासः, सचापि सामान्यविवक्षया एकः, विशेषविवक्षयाऽनेक इति, एवं वदन्तं नैगमं संग्रहो भणति-यद् भणसि पण्णां प्रदेशः तन्न भवति, कस्माद्?, यस्माद्यो देशप्रदेशः स तस्यैव द्रव्यस्य, तदव्यतिरिक्तत्वाद्देशस्य, यथा को दृष्टान्त इत्यत्राह-दासेन मे खरः क्रीतः, दासोऽपि मे खरोऽपि मे, तत्संबन्धित्वात् खरस्य, एतावता साधर्म्यं, तन्मा भण-पण्णां प्रदेशः, पञ्चरय पञ्चमोऽविद्यमानत्वात्, परिकल्पने च प्रभूततरापत्तेः, भण पंचानां प्रदेश इत्यादि, अविशुद्धश्चायं संग्रहः, अपरसामान्याभ्युपगमात्, एवं वदन्तं संग्रहं व्यवहारो भणति-यद्भणसि पञ्चानां प्रदेशस्तन्न भवति-न युज्यते, कस्माद्?, यदि पञ्चानां गोष्ठिकानां किञ्चिद् द्रव्यं सामान्यात्मकं भवति तद्यथा हिरण्यं वेत्यादि एवं प्रदेशोऽपि स्यात् ततो युज्येत वक्तुं पञ्चानां प्रदेशः, न चैतदेवं, तस्मात् भण पञ्चविधः, पञ्चप्रकारः प्रदेशस्तद्यथा धर्मप्रदेश इत्यादि, इत्थं लोके व्यवहारदर्शनात्, एवं वदन्तं व्यवहारमृजुसूत्रो भणति-यद्भणसि पञ्चविधः प्रदेशस्तन्न भवति, कस्माद्?, यस्माद् यदि ते पञ्चविधः प्रदेश एवमेकैको धर्मास्तिकायादिप्रदेशः शब्दश्रुतिप्रामाण्यात्तथाप्रतीतेः पञ्चविधः प्राप्तः, एवं च पंचविंशतिविधः प्रदेशः इति, तत् मा भण पञ्चविधः प्रदेशः, भण भाज्यः प्रदेशः, स्याद् धर्मस्येत्यादि, अपेक्षावशेन भाज्यः यो यस्यात्मीयः स तस्यास्ति, परकीयस्य परधनवत् निष्प्रयोजनत्वात् खरविषाणवत्प्रदेश एवेत्यतः स्याद्धर्मस्य प्रदेश इति, एवं ऋजुसूत्रं साम्प्रतं शब्दो भणति-भाज्यः प्रदेशस्तन्न भवति, कस्माद्?, यस्मादेवं ते धर्मप्रदेशोऽपि स्यादधर्मप्रदेश इति विकल्पस्यानिवारितत्वात् स्यादधर्मप्रदेश इत्याद्यापत्तेः, अनवधारणादनवस्था भविष्यति, तन्मा भण भाज्यः प्रदेशो, भण-धर्मप्रदेशः प्रदेशो धर्म इत्यादि, अयमत्र भावार्थः-धर्मप्रदेश इति धर्मात्मकः प्रदेशः, स प्रदेशो नियमात् धर्मास्तिकायस्तदव्यतिरिक्तत्वात्तस्य, एवमधर्माकाशयोरपि भावनीयं, एवं जीवात्मकः प्रदेशः प्रदेशो नोजीव इति, तज्जी-

वाव्यतिरिक्तोऽपि सकलजीवास्तिकायाव्यतिरिक्तत्वानुपपत्तेरनेकद्रव्यत्वान्नोजीवो जीवास्तिकायैकदेश इत्यर्थः, एवं स्कन्धप्रदेशोऽपि भावनीय इति, एवं भणन्तं साम्प्रतं शब्दे नानार्थशब्दरोहणात् समभिरूढ इति समभिरूढो भणति-यद् भणसि धर्मप्रदेशः स प्रदेशो धर्म इत्यादि तन्मैवं भण, किमित्यत आह-इह खलु द्वौ समासौ संभवतः, तद्यथा-तत्पुरुषश्च कर्मधारयश्च, तन्न ज्ञायते कतरेण समासेन भणसि ?, किं तत्पुरुषेण कर्मधारयेण वा ?, यदि तत्पुरुषेण भणसि तन्मैवं भण, दोषसंभवादित्यभिप्रायः, दोषसंभव आर्य-धर्मस्य प्रदेशो धर्मप्रदेश इति भेदाऽऽपत्तिः, यथा राज्ञः पुरुष इति, तैलस्य धारा शिलापुत्रस्य शरीरमित्यभेदेऽपि षष्ठी श्रूयत इति चेत् उभयत्र दर्शनात्संशये एवमेव दोषः, अथ कर्मधारयेण ततो विशेषतो-विशेषेण भण-धर्मश्चासौ प्रदेश इति समानाधिकरणः कर्मधारयः, अत एवाह-स च प्रदेशो धर्मस्तदव्यतिरिक्तत्वात्तस्य, एवं शेषेष्वपि भावनीयं, एवं भणन्तं समभिरूढं एवम्भूतो भणति-यद् भणसि तत्तथा-तेन प्रकारेण सर्वे-निर्विशेषं कृत्स्नमिति देशप्रदेशकल्पनावर्जितं प्रपूर्णं आत्मस्वरूपेणाविकलं निरवशेषं तदेवैकत्वान्निरवयवं एकग्रहणगृहीतं परिकल्पितभेदत्वादन्यतमाभिधानवाच्यं, देशोऽपि मे अवस्तु प्रदेशोऽपि मे अवस्तु, कल्पनायोगाद्, इदमत्र हृदयं-प्रदेशस्य प्रदेशिनो भेदो वा स्यादभेदो वा?, यदि भेदस्तस्येति संबन्धो वाच्यः, स चातिप्रसंगदोषग्रहग्रस्तत्वादशक्यो वक्तुं, अथाभेदः पर्यायशब्दतया घटकुटशब्दवदुभयोरुच्चारणवैयर्थ्यं, तस्मादसमासमेकमेव वस्त्विति, एवं निजनिजवचनीयसत्यतामुपलभ्य सर्वनयानां सर्वत्रानेकान्तसमये स्थिरः स्यात् न पुनरसद्ग्राहं गच्छेदिति, भणितं च-"निययवयणिज्जसच्चा सव्वणया परवियालणे मोहा। ते पुण अदिट्ठसमया वि भवंति सच्चे व अलिए वा ॥१॥ तदेतत् प्रदेशदृष्टान्तेन नयप्रमाणं, तदेतन्नयप्रमाणं।

'से किं तं संखप्पमाण' मित्यादि ( १४६-२३० ) संख्यायतेऽनयेति संख्या सैव प्रमाणं, संख्या अनेकविधा प्रज्ञप्ता, तद्यथा-नामसंख्येत्यादि, इह संख्याशङ्खयोः ग्रहणं प्राकृतमधिकृत्य समानशब्दाभिधेयत्वात्, गोशब्देन वाग्रश्म्यादिग्रहणवत्, उक्तञ्च-"गोशब्दः पशुभूम्य-

माणेहिं सरसवेहिं दीवसमुद्दा उद्धारिज्जंतीत्ति, तत्प्रमाणा गृह्यन्त इत्यर्थः, स्याद्-उद्धरणं किमर्थं ?, उच्यते, अणवट्ठितसलागपरिमाणज्ञापनार्थं, चोदगो पुच्छति- जदि पढमपल्ले ओक्खित्ते पक्खित्ते निट्ठिते य सलागा ण पक्खिप्पति तो किं परूवितो?, उच्यते, एस अणवट्ठितयपरिमाणदंसणत्थं परूवितो, इदं च ज्ञापितं भवति-पढमत्तणतो पढमपल्ले अणवट्ठाणभावो णत्थि, सलागापल्लो अणवट्ठियसलागाण भरेयव्वो, जतो सुत्ते पढमसलागा पढमअणवट्ठियपल्लभेदे देसिया, अणवट्ठियपल्यपरंपरसलागाण संलप्पा लोगा भरिता इत्यादि, असंलप्पत्ति जं संखिज्जे असंखिज्जे वा एगतरे पक्खेवेउं न शक्यते तं असंलप्पंति, कहं?, उच्यते, उक्कोससंखेज्जस्स अतिबहुत्तणओ सुतव्ववहारीण य अव्ववहारित्तणओ असंखिज्जमिव लक्खिज्जति, जम्हा य जहण्णपरित्तासंखिज्जगं ण पावति आगमपच्चक्खववहारिणो य संखेज्जववहारित्तणओ असंलप्पा इति भणितं, लोगात्ति सलागापल्लागा, अहवा जहा दुगादि दससतसहस्सलक्खकोडियाविएहिं रासीहिं अहिलावेण गणणसंखसंववहारा कज्जंति, न तहा उक्कोसगसंखेज्जगेण आदिल्लगरासीहिं य ओमत्थगपरिहाणीए जा सीसपहेलिअंको परिमाणरासी, एतेहिं गणणाभिलावसंववहारे ण कज्जइत्ति अतो एते रासी असंलप्पा, इदं कारणमासज्ज भणितं असंलप्पा लोगा भरिता इति, अहवा अणवट्ठितसलागपडिसलागमहासलागपल्लाण सरूवे गुरुणा कते-भणिते सीसो पुच्छति-ते कहं भरेयव्वा ?, गुरू आह- एवंविहसलागाण असंलप्पा लोगा भरिता, संलप्पा नाम संसद्दा, ण संलप्पा असंलप्पा, सशिखा इत्यर्थः, तहावि उक्कोसगं संखेज्जगं ण पावतित्ति भणिते सीसो पुच्छति-कहं उक्कोसगसंखेज्जसरूवं जाणितव्वं?, उच्यते, से जहा णामए मंचे इत्यादि, उवसंहारो एवं-अणवट्ठितसलागाहिं सलागापल्ले पक्खिप्पमाणीहिं ततो य पडिसलागापल्ले ततोवि महासलागापल्ले, होहीइ सा सलागा जा उक्कोसगसंखिज्जगं पाविहिति । इदाणिं उक्कोसगसंखिज्जगपरूवणत्थं फुडतरं इमं भण्णइ-जहा तंमि मंचे आमलएहिं पक्खि-

पमाणेहिं होदिह थं आमलगं जं तं मंचं भरेहिति, अण्णं आमलगं ण पडिच्छतित्ति, एवमुक्कोसयं संखिज्जयं दिट्ठं, तस्स इमा परूवणा-जंबुद्दीवप्पमाणमेत्ता चत्तारि पल्ला, पढमो अणवट्ठितपल्लो बितिओ सलागापल्लो तइओ पडिसलागापल्लो चउत्थो महासलागापल्लो, एते चउरोवि रयणप्पभाए पुढवीए पढमं रयणकंडं जोयणसहस्सावगाढं भित्तूण बितिए वइरकंडे पतिट्ठिया दिट्ठा, इमा ठवणा-०००० एते उ ठिता, एगो गणगं ठोवेति दुप्पभितिसंखिज्जकाउं, तत्थ पढमे अणवट्ठितपल्ले दो सरिसवा पक्खित्ता, एते जहण्णगसंखिज्जगं, तओ एगुत्तरवुड्ढीए खिप्पिज्जंते पंच जाव सो पुणो अण्णं सरिसवं ण पडिच्छतित्ति ताहे असब्भावपट्ठवणं पडुच्च वुच्चति, तं कोऽवि देवो दाणवो वा उक्खिवित्तुं वामकरयले काउं ते सरिसवे जंबुद्दीवाइए दीवे समुद्दे पक्खिवेज्जा जाव णिट्ठिया, ताहे सलागा-एगो सिद्धत्थओ छूढो सा सलागा, ततो जहिं दीवे समुद्दे वा सिद्धत्थओ णिट्ठितो सह तेण आरेण जे दीवसमुद्दा तेहिं सव्वेहिं तप्पमाणो पुणो अण्णो पल्लो भरिज्जइ, सोऽवि सिद्धत्थयाण भरितो जंमि णिट्ठितो ततो परतो दीवसमुद्देसु एक्केक्कं पक्खिवेज्जा जाव सोऽवि णिट्ठिओ, ततो सलागापल्ले बितिओ सरिसवो छूढो, जत्थ णिट्ठितो तेण सह आदिल्लएहिं पुणो अण्णो पल्लो आइज्जति, सोऽवि सरिसवाणं भरितो, ततो परतो एक्केक्कं दीवसमुद्देसु पक्खिवंतेणं णिट्ठावितो, ततो सलागापल्ले ततिया सलागा पक्खित्ता, एवं एतेणं अणवट्ठितपल्लकरणक्कमेण सलागग्गहणं करेंतेण सलागापल्लो सलागाण भरितो, कमागतः अणवट्ठितो, ततो सलागापल्लो सलागं ण पडिच्छइत्तिकाउं सो चेव उक्खेत्तो, णिट्ठितट्ठाणा परतो पुव्वक्कमेण पक्खित्तो णिट्ठितो य, ततो अणवट्ठिओ उक्खित्ता णिट्ठियट्ठाणा पुव्वकमेण पक्खित्तो णिट्ठिओ य, ततो सलागापल्ले सलागा पक्खित्ता, एवं अण्णेणं अण्णेणं अणवट्ठितेण आकिरनिकिरंतेण जाहे पुणो सलागापल्लो भरितो अणवट्ठितो य, ताहे पुण सलागापल्लो उक्खित्तो पक्खित्तो णिट्ठितो य पुव्वकमेण, ताहे पडिसलागापल्ले बितिया पडिसलागा छूढा, एवं आइरनिकिरणेण जाहे तिण्णिवि पडिसलागसलागअणवट्ठितपल्ला य भरिता ताहे

पडिसलागापल्लो पक्खित्तो, पक्खिप्पमाणो णिट्ठितो य, ताहे महासलागापल्ले महासलागा पक्खित्ता, ताहे सलागापल्लो उक्खित्तो पक्खिप्पमाणो णिट्ठितो य, ताहे पडिसलागा पक्खित्ता, ताहे अणवट्ठितो उक्खित्तो पक्खित्तो य, ताहे सलागापल्ले सलागा पक्खित्ता, एवं आइरणणिक्किरणकमेण ताव कायव्वं जाव परंपरेण महासलागापडिसलागसलागअणवट्ठितपल्ला य चउरोवि भरिया, ताहे उक्कोसमतिच्छियं, एत्थ जावतिया अणवट्ठितपल्ले सलागपल्लि पडिसलागापल्ले महासलागापल्ले य दीवसमुद्दा उद्धरिया जे य चउपल्लट्ठिया सरिसवा एस सव्वोऽवि एतप्पमाणो रासी एगरूवूणो उक्कोसयं संखेज्जयं हवति, जहण्णुक्कोसयाण मज्झे जे ठाणा ते सव्वे पत्तेयं अजहण्णमणुक्कोसया संखेज्जया भाणियव्वा, सिद्धंते जत्थ संखेज्जयगहणं कयं तत्थ सव्व अजहण्णमणुक्कोसयं दट्ठव्वं। एवं संखिज्जगे परूविते सीसो पुच्छति—भगवं! किमेतेण अणवट्ठिते पल्ले सलागापडिसलागामहासलागापल्लियादीहिं य दीवसमुद्दुद्धारगहणेण य उक्कोसगसंखेज्जगपरूवणा कज्जति?, गुरू भणति—णत्थि अण्णो संखेज्जगस्स फुडतरो परूवणोवायोत्ति, किंचान्यत्- असंखेज्जगमणंतगरासीनिगप्पराओवि एताओ चेव आधाराओ, रूवुत्तरगुणघूद्धताओ परूवणा कज्जतीत्यर्थः, उक्तं त्रिविधं संख्येयकं। इदाणिं णवविहं असंखेज्जगं भणति-'एवमेव उक्कोसए' इत्यादि सुत्तं, असंखेज्जगे परूविज्जमाणे एवमेव अणवट्ठितपल्लदीवुद्धारएण उक्कोसगं संखिज्जगमाणीए एगसरिसवरूवं पक्खित्तं ताहे जहण्णगं भवति, 'तेण परं' इत्यादि सूत्रं, एवं असंखेज्जग अजहण्णमणुक्कोसट्ठाणाण य जाव इत्यादि सुत्तं, सीसो पुच्छति-'उक्कोसगं' इत्यादि सुत्तं, गुरू आह-जहण्णगं परित्ताअसंखेज्जगं' ति, अस्य व्याख्या—तं जहण्णगं परित्तासंखेज्जयं विरल्लियं ठविज्जति, तस्स विरल्लियठावियस्स एक्केक्के सरिसवट्ठाणे जहण्णपरित्तासंखेज्जगमेत्तो रासी दायव्वो, ततो तेसिं जहण्णपरित्तासंखेज्जमेत्ताणं रासीणं अण्णमण्णब्भासो त्ति-गुणणा कज्जति, गुणिते जो रासी जातो सो रूवूणोति रूवं पाडिज्जइ, तंमि पाडिते उक्कोसगं परित्तासंखेज्जगं होति, एत्थ दिट्ठंतो-जहण्णगं परित्तासंखेज्जगं बुद्धीकप्प-

सार पंच ठवाति, ते विरलिया इमे ५५५५५, एक्केक्कस्स हेट्ठा जहण्णगपरित्तासंखेज्जगमेत्तरासी ठविया ५५५५५, एतेसिं 'पंचगाणं अण्णमण्णब्भासोत्ति गुणितो जाता पणवीसं सता पणवीसा, एत्थ अण्णमण्णब्भासोत्ति जं भणितं एत्थ अण्णे आयरिया भणंति–वग्गियसंवग्गियंति भणितं, ५५५५५. अन्योन्यार्थे–स्वप्रमाणेन राशिना रासी गुणिज्जमाणो वग्गियंति भण्णति, सो चेव संवड्ढमाणो रासी पुव्विल्लगुणकारेण गुणिज्जमाणो संवग्गियंति, अतो अण्णमण्णब्भत्थस्स वग्गियसंवग्गियस्स य नार्थभेद इत्यर्थः, अन्यः प्रकारः, अहवा जहण्णगं जुत्तासंखेज्जगं रूवूणं कज्जति, ततो उक्कोसगं परित्तासंखेज्जगं होति, उक्तं तिविहंपि परित्तासंखेज्जगं। इदाणिं तिविहं जुत्तासंखेज्जगं भण्णति, तत्थ इमो पण्णोत्तरो,–सीसो भणति-भगवं! जं तुब्भे जहण्णगं जुत्तासंखेज्जगपरूवणं करेह तमहं ण याणे, अतो पुच्छा इमा-जहण्णजुत्तासंखेज्जगं केत्तियं होति?, आचार्य उत्तरमाह-'जहण्णगं परित्तासंखेज्जग' इत्यादि सूत्रं पूर्ववत्कंठ्यं, नवरं पडिपुण्णेत्ति-गुणिते रूवं न पाडिज्जति, अन्यः प्रकारः, अथवा 'उक्कोसए' इत्यादि, सूत्रं कंठ्यं, जावइतो जहण्णजुत्तासंखेज्जए सरिसवरासी एगावलियाएवि समयरासी तत्तिओ चेव, जत्थ पुण आवलियागहणं तत्थ जहण्णजुत्तासंखेज्जगपडिपुण्णप्पमाणमेत्ता समया गाहितव्वा, 'तेण परं' मित्यादि, जहण्णजुत्तासंखेज्जगा परतो एगुत्तरवड्ढिया असंखेज्जा अजहण्णमणुक्कोसजुत्तासंखेज्जगट्ठाणा गच्छंति, जाव उक्कोसगं जुत्तासंखेज्जगं ण पावतीत्यर्थः, सीसो पुच्छति-उक्कोसगं जुत्तासंखेज्जगं केत्तियं भवति?, आचार्य आह–जहण्णगजुत्तासंखेज्जगपमाणरासिणा आवलियासमयरासी गुणितो रूवूणो उक्कोसगं जुत्तासंखेज्जगं भवति, अण्णे आयरिया भणंति-जहण्णजुत्तासंखेज्जरासिस्स वग्गो कज्जति, किमुक्तं भवति?, आवलिया-आवलियाए गुणिज्जति रूवूणिओ उक्कोसगं जुत्तासंखेज्जगं भवति, अन्यः प्रकारः-'अहवा जहण्णगं' इत्यादि सूत्रं, कंठ्यं। शिष्यः पृच्छति—'उक्कोसगं' इत्यादि सूत्रं, आचार्य उत्तरमाह–'जहण्णगं' मित्यादि सूत्रं, कंठ्यं, अन्यः प्रकारः 'अहवा जहण्णगं इत्यादि सूत्रं, कंठ्यं, अण्णे पुण आयरिया उक्कोसगं

असंखेज्जासंखेज्जगं इमेण पगारेण पण्णवेंति-जहण्णगअसंखेज्जासंखेज्जगरासिस्स वग्गो कज्जति, तस्स रासिस्स पुणो वग्गो कज्जति, तस्सेव वग्गस्स पुणो वग्गो कज्जति, एवं तिण्णि वारा वग्गितसंवग्गिते इमे दस पक्खेवया पक्खिप्पंति 'लोगागासपदेसा १ धम्मा २ धम्मे ३ गजीवदेसा य ४ । दव्वट्ठिया णिओया ५ पत्तेया चेव बोद्धव्वा ६ ॥ १ ॥ ठितिबंधज्झवसाणे ७ अणुभागा ८ जोगछेयपलिभागा ९ । दोण्ह य समाण समया १० असंखपक्खेवया दस उ ॥ २ ॥ सव्वे लोगागासपदेसा, एवं धम्मत्थिकायप्पएसा अधमत्थिकायप्पएसा एगजीवप्पदेसा दव्वट्ठिया णिओयात्ति-सुहुमबादरअणंतवणस्सतिसरीरा इत्यर्थः, पुढवादि जाव पंचेंदिया सव्वे पत्तेयसरीराणि गहियाणि, ठितिबंधज्झवसाणेत्ति-णाणावरणादियस्स संपरायकम्मस्स ठितिविसेसबंधा जेहिं अज्झवसाणठाणेहिं भवंति ते ठितिबंधज्झवसाणे, ते य असं[illegible]ख्या, कहं?, उच्यते, णाणावरणदंसणावरणमोहआउअंतरायस्स जहण्णिया अंतमुहुत्ता ठिती, सा एगसमउत्तरवुड्ढीए ताव गता जाव मोहणिज्जस्स सत्तरिसागरोवमकोडाकोडिओ सत्त य वाससहस्सत्ति, एते सव्वे ठितिविसेसा, तेसिं अज्झवसायट्ठाणविसेसेहिंतो णिप्फज्जन्ति अतो ते असंखेज्जा भणिता, अणुभागत्ति-णाणावरणादिकम्मणो जो जस्स विवागो सो अणुभागो, सो य सव्वजहण्णठाणाओ जाव सव्वुक्कोसो समणुभावो, एते अणुभागविसेसा जेहिं अज्झवसाणट्ठाणविसेसेहिंतो भवंति ते अज्झवसाणट्ठाणा असंखेज्जगाऽऽगासपदेसमेत्ता, अणुभागट्ठाणावि तत्तिया चेव, जोगच्छेयपलिभागा, अस्य व्याख्या-जोगोत्ति जोगा मणवतिकायप्पओगा, तेसिं मणादियाणं अप्पप्पणो जहण्णठाणाओ जोगविसेसपहाणुत्तरवुड्ढीए जाव उक्कोसो मणवइकायपओयत्ति, एते एगुत्तरवुड्ढिया जोगविसेसट्ठाणछेदपलिभागा भण्णंति, ते मणादियछेदपलिभागा पत्तेयं पिंडिया वा असंखेज्जा इत्यर्थः, 'दोण्ह य समाण समया उ' त्ति उस्सप्पिणी ओसप्पिणी य, एयाण समया असंखेज्जा चेव, एते दस असंख[illegible]पक्खेवया

पक्खिविउं पुणो रासी तिण्णि वारा वग्गिओ, ताहे रूवोणो कओ, एवं उक्कोसयं असंखेज्जासंखेज्जयप्पमाणं भवति, उक्तं असंखेज्जगं। इदाणिं अणंतयं भण्णति-सीसो पुच्छति—

'जहण्णगं' इत्यादि सुत्तं, कंठ्यं, गुरू आह—'जहण्णगं असंखेज्जासंखेज्जगं' इत्यादि सुत्तं, कंठ्यं, अन्यः प्रकारः-'उक्कोसए' इत्यादि सुत्तं, कंठ्यं, 'तेण पर' मित्यादि सुत्तं, कंठ्यं, सीसो पुच्छति-'उक्कोसयं परित्ताणंतयं' इत्यादि सुत्तं, कंठ्यं, गुरू आह-'जहण्णगं' इत्यादि सुत्तं, कंठ्यं, अन्यः प्रकारः-'अहवा जहण्णगं' इत्यादि सुत्तं, कंठ्यं, सीसो पुच्छति-'जहण्णयं परित्ता' इत्यादि सुत्तं, कंठ्यं, आचार्य आह-'जहण्णगं परित्ताणंतगं इत्यादि सुत्तं, कंठ्यं, 'अहवा उक्कोसए' इत्यादि सुत्तं, कंठ्यं, एत्थ अण्णायरियाभिप्पायतो वग्गितसंवग्गितं भाणियव्वं, पूर्ववत्, जहण्णो जुत्ताणंतयरासी जावइओ अभव्वरासीवि केवलणाणेण वत्तितो चेव दिट्ठो, 'तेण परं' इत्यादि सुत्तं, कंठ्यं, आचार्य आह-'जहण्णएणं' इत्यादि सुत्तं, कंठ्यं, अन्यः प्रकारः 'अहवा जहण्णगं' इत्यादि सुत्तं, कंठ्यं, एत्थ अण्णायरियाभिप्पायतो अभव्वरासीप्पमाणस्स रासीणो सति वग्गो कज्जति, ततो उक्कोसयं जुत्ताणंतयं भवति, सीसो पुच्छति-'जहण्णयं अणंताणंतयं केत्तियं भवति?' सुत्तं, कंठ्यं, आचार्य आह—'जहण्णएणं' इत्यादि सुत्तं, कंठ्यं, अन्यः प्रकारः-'अहवा उक्कोसए' इत्यादि सूत्रं, कंठ्यं, 'तेण पर' मित्यादि सुत्तं, कंठ्यं, उक्कोसयं अणंताणंतयं नास्त्येवेत्यर्थः, अण्णे आयरिया भणंति-जहण्णयं अणंताणंतयं तिण्णि वारा वग्गियं, ताहे इमे एत्थ अणंतपक्खेवा पक्खित्ता, जहा-सिद्धा १ णिओयजीवा २ वणस्सती ३ काल ४ पोग्गला ५ चेव। सव्वमलोगागासं ६ छप्पेतेऽणंतपक्खेवा ॥ १ ॥ सव्वे सिद्धा सव्वे सुहुमबादरा णिओयजीवा परित्ता अणंता सव्वे वणस्सइकाइया सव्वे तीताणागतवट्टमाणकालसमयरासी सव्वपोग्गलदव्वाण परमाणुरासी सव्वागासपएसरासी, एते पक्खिविऊण तिण्णि वारा वग्गियसंवग्गिओ काउं तहवि उक्कोसयं अणंताणंतयं ण पावति, तओ केवलणाणं केवल-

दंसणं च पक्खित्तं, तहावि उक्कोसयं अणंताणंतयं ण पावति, सुत्ताभिप्पायाओ, जओ सुत्ते भणितं-तेण परं अजहण्णमणुक्कोसाइं ठाणाइंति, अण्णायरियाभिप्पायतो केवलणाणदंसणेसु पक्खित्तेसु पत्तं उक्कोसयं अणंताणंतयं, जओ सव्वमणन्तयमिह, णत्थि अण्णं किंचिदिति, जहिं अणंताणंतयं मग्गिज्जति तहिं अजहण्णमणुक्कोसयं अणंताणंतयं गहियव्वं, उक्ता गणनासंख्या । 'से किं तं भावसंखा' इत्यादि, प्राकृतशैल्याऽत्र शङ्खाः परिगृह्यन्ते, आह च-य एते इति प्ररूपकप्रत्यक्षा लोकप्रसिद्धा वा जीवा आयुःप्राणादिमन्तः स्वस्वगतिनामगोत्राणि तिर्यग्गतिद्वीन्द्रियौदारिकशरीराङ्गोपाङ्गादीनि नीचेतरगोत्रलक्षणानि कर्माणि तद्भावापन्ना विपाकेन वेदयन्ति त एव भावसंख्या इत्युक्ता भावसंख्याः, 'सेत्त' मित्यादि निगमनत्रयं, समाप्तं प्रमाणद्वारं ॥ अधुना वक्तव्यताद्वारायसरः, तत्राह—

'से किं तं वत्तव्वया' इत्यादि (१४७-२४३) तत्राध्ययनादिपु सूत्रप्रकारेण विभागन देशनियतगंधनं वक्तव्यता, इयं च त्रिविधा स्वसमयादिभेदात्, तत्र स्वसमयवक्तव्यता यत्र यस्यां णमिति वाक्यालंकारे स्वसमयः-स्वसिद्धान्तः आख्यायते, यथा पंचास्तिकायाः, तद्यथा-धर्मास्तिकायः इत्यादि, तथा प्रज्ञाप्यते यथा गतिलक्षणो धर्मास्तिकाय इत्यादि, तथा प्ररूप्यते यथाऽसावसंख्येयप्रदेशात्मकादिभिः, तथा दर्श्यते मत्स्यानां जलमित्यादि, तथा निदर्श्यते यथा तथैवैपोऽपि जीवपुद्गलानामिति, उदाहरणमात्रमेतदेवमन्यथापि सूत्रालापयोजना कर्त्तव्येति शेपः, स्वसमयवक्तव्यता, परसमयवक्तव्यता तु यत्र परसमय आख्यायत इत्यादि, यथा 'संति पंचमहब्भूया, इहमेगेसिं आहियं । पुढवी आऊ य वाऊ य, तेऊ आगासपंचमा ॥१॥ एते पंच महब्भूया, तेब्भो एगत्ति आहियं । अह तेसिं विणासेणं, विणासो होइ देहिणो ॥ २ ॥ इत्यादि लोकायतसमयवक्तव्यतारूपत्वात् परसमयवक्तव्यतेति, शेपसूत्रालापकयोजनापि स्वबुद्ध्या कार्या, सेयं परसमयवक्तव्यता, स्वसमयपरसमय-

वक्तव्यता पुनर्यत्र स्वसमयः परसमयश्चाऽऽख्यायेते, यथा ' आगारमावसंतो वा, अरण्णा वावि पव्वया । इमं दरिसणमावण्णा, सव्वदुक्खा विमुच्चती ॥ १ ॥ त्यादि, शेषसूत्रालापकयोजना तु स्वधिया कार्येति, सेयं स्वसमयपरसमयवक्तव्यता ॥

इदानीं नयैर्विचारः क्रियते—को नयः? कां वक्तव्यतामिच्छति ?, तत्र नैगमव्यवहारौ त्रिविधां वक्तव्यतामिच्छतः, तद्यथा—स्वसमयवक्तव्यतामित्यादि, तत्र सामान्यरूपो नैगमः, प्रविभेदं सामान्यरूपमेवेच्छति, [illegible] ह्येवं मन्यते-भिण्णाभिधेया अपि स्वसमयवक्तव्यताऽविशेषात्स्वसमयसामान्यमतिरिक्त (च्य न) वर्त्तते, व्यतिरेके स्वसमयवक्तव्यताऽविशेषत्वानुपपत्तेः, विशेषरूपः स नैगमो, व्यवहारस्तु प्रतिभेदं भिन्नरूपमेवेच्छति, पदार्थानां विचित्रत्वादिति, यथाऽस्तिकायवक्तव्यता मूलगुणवक्तव्यतेत्येवमादि, ऋजुसूत्रस्तु द्विविधां वक्तव्यतामिच्छतीत्यादि सयुक्तिकं सूत्रसिद्धमेव, त्रयः शब्दनयाः शब्दसमभिरूढएवंभूताः एकां स्वसमयवक्तव्यतामिच्छन्ति, शुद्धनयत्वात्, नास्ति परसमयवक्तव्यतेति च मन्यंते, कस्मादेतदेवं ?, यस्मात्परसमयोऽनर्थ इत्यादि, तत्र 'निमित्तकारणहेतुषु सर्वासां विभक्तीनां प्रायो दर्शन'मिति वचनाद् हेतवस्त एत इति, परसमयानर्थत्वादहेतुत्वादित्येवमादयः, तत्र कथमनर्थ? इति, नास्त्येवात्मेत्यनर्थप्ररूपकत्वादस्य, आत्माभावे प्रतिषेधानुपपत्तेः, उक्तंच- 'जो चिंतइ सरीरे णत्थि अहं स एव होइ जीवोत्ति । णहु जविंमि असंते संसयउप्पायओ अण्णो ॥ १ ॥" अहेतुः- हेत्वाभासेन प्रवृत्तेः, यथा नास्त्येवात्मा अत्यन्तानुपलब्धेः, हेत्वाभासत्वं चास्य ज्ञानादितद्गुणोपलब्धेः, उक्तं च—"ज्ञानानुभवतो दृष्टस्तद्गुणात्मा कथं च न ? । गुणदर्शनरूपं च, घटादिष्वपि दर्शनम् ॥१॥" असद्भावः—असद्भावाभिधानात्, असद्भावाभिधानं चात्मप्रतिषेधेनोक्तत्वात्, स्यादेतत्-सर्वगतत्वादिधर्मिणोऽसत्त्वं रूपादिस्कन्धसमुदायात्मकस्य तु सद्भाव एवेति, न, तस्य भ्रान्तिरूपत्वात्, भ्रान्तिमात्रत्वाभ्युपगमश्च "फेनपिण्डोपमं रूपं, वेदना बुद्बुदोपमा। मरीचिसदृशी संज्ञा, संस्काराः कदलीनिभाः ॥१॥ मायोपमं च विज्ञानमुक्तमादित्यबन्धुने" त्यादि, अक्रियक्षणिकै-

कान्ताऽभ्युपगमेन कर्मबन्धक्रियाऽभावप्रतिपादकत्वाद्, उक्तं च-"उत्पन्नस्यानवस्थानादभिसंधाद्ययोगतः। हिंसाऽभावान्न बन्धः स्यदुपदेशो निरर्थकः ॥१॥" इत्यादि, उन्मार्गः परस्परविरोधात्, विरोधाकुलत्वं चैकांतक्षणिकत्वेऽपि हिंसाऽभ्युपगमाद्, उक्तं च तत्र-प्राणी प्राणिज्ञानं घातकचित्तं च तद्गता चेष्टा। प्राणैश्च विप्रयोगः पंचभिरापद्यते हिंसे ॥१॥" त्यादि, अनुपदेशः अहितप्रवर्त्तकत्वाद्, उक्तं च-"सर्वं क्षणिकमित्येतत्, ज्ञात्वा को न प्रवर्त्तते। विषयादौ? विपाको मे, न भावीति दृढव्रतः? ॥ १ ॥" इत्यादि, यतश्चैवमतो मिथ्यादर्शनं, ततश्च मिथ्यादर्शनमितिकृत्वा नास्ति परसमयवक्तव्यतेति वर्त्तते, एवं समयांतरेष्वपि स्वबुध्या उत्प्रेक्ष्य योजना कार्या, तस्मात् सर्वा स्वसमयवक्तव्यता, नास्ति परसमयवक्तव्यतेति, अन्ये तु व्याचक्षते-परसमयोऽनर्थादिर्दुर्णयरूपत्वाद्, यथाभूतस्त्वसौ विद्यते प्रतिपक्षसापेक्षस्तथाभूतः स्याद्वादाङ्गत्वात् स्वसमय एवेति, तदुक्तं च-"नयास्तव स्यात्पदलाञ्छिता इमे, रसोपविद्धा इव लोहधातवः। भवन्त्याभिप्रेतगुणा यतस्ततो, भवन्त्यमार्याः प्रणता हितैषिणः ॥ १ ॥" इत्यादि, आह-न खलु अनेकान्त एव मतममीषां शब्दादीनां तत्कथमेवं व्याख्यायते? इति, उच्यते, विवादस्तद्विषयः, शुद्धनयाश्चैते भावप्रधानाः, तद्भावश्चेत्थमेवेति न दोषः, सेयं वक्तव्यतेति निगमनं, उक्ता वक्तव्यता ॥ साम्प्रतमर्थाधिकारावसरः- स च सामायिकादीनां प्राक् प्रदर्शित एवेति न प्रतन्यते, वक्तव्यतार्थाधिकारयोश्चायं भेदः-अर्थाधिकारो ह्यध्ययने आदिपदादारभ्य सर्वपदेष्वनुवर्त्तते, पुद्गलास्तिकाये मूर्त्तत्ववद्, देशादिनियता तु वक्तव्यतेति।

॥'से किं तं समोतारे?' इत्यादि ( १४९-२४६ ) समवतरणं समवतारः, अध्ययनासन्नताकरणमिति भावः, अयं च षड्विधः प्रज्ञप्त इत्यादि निगदसिद्धमेव यावज्ज्ञशरीरभव्यशरीरव्यतिरिक्तो द्रव्यसमवतारस्त्रिविधः प्रज्ञप्तः, तद्यथा—आत्मसमवतार इत्यादि, तत्र सर्वद्रव्याण्यप्यात्मसमवतारेणात्मभावे समवतरन्ति-वर्त्तन्ते, तदव्यतिरिक्तत्वाद्, यथा जीवद्रव्याणि जीवभावे इति, भावान्तरसमवतारे तु स्वभावत्यागा-

द्वयस्तुत्वप्रसंगः, व्यवहारतस्तु परसमवतारेण परभावे, यथा कुण्डे बदराणि, स्वभावव्यवस्थितानामेवान्यत्र भावात्, तदुभयसमवतारेण तदुभये, यथा गृहे स्तम्भः आत्मभावे चेत्यादि, मूलपाददेहलीकुंभस्तम्भतुलादिसमुदायात्मकत्वाद् गृहस्य, तत्र च स्तम्भस्य मूलपादादयः परे, आत्मा पुनरात्मैव, तदुभये चास्य समवतारस्तथावृत्तेरिति, एवं घटे ग्रीवा आत्मभावे च, सामान्यविशेषात्मकत्वात्तस्य, अथवा ज्ञशरीरभव्यशरीरव्यतिरिक्तो द्रव्यसमवतारो द्विविधः प्रज्ञप्तस्तद्यथा-आत्मसमवतारस्तदुभयसमवतारश्च, शुद्धः परसमवतारो नास्त्येव, आत्मसमवताररहितस्य परसमवताराभावात्, न ह्यात्मन्यवर्त्तमानो गर्भो जनन्युदरादौ वर्त्तत इति, 'चउसट्ठिया' इत्यादि, छप्पण्णा दो पलसता माणी भण्णति, तस्स चउसट्ठीभागो चउसट्ठिया चउरो पला भवंति, एवं बत्तीसियाए अट्ठ पला, सोलसियाए सोलस, अट्ठभाइयाए बत्तीसं, चउभाइयाए चउसट्ठिं, दोभाइयाए, अट्ठावीसुत्तरं पलसतं, सेसं कंठ्यं। द्रव्यता त्वमीषां प्रतीतैव, क्षेत्रकालसमवतारस्तु सूत्रसिद्ध एव, एवं सर्वत्र। उभयसमवतारे तु क्रोध आत्मसमवतारेण आत्मभावे समवतरति, तदुभयसमवतारेण माने समवतरति आत्मभावे च, यतो मानेन क्रुध्यतीति, एवं सर्वत्रोभयसमवतारकरणे आत्मसामान्यधर्मत्वाऽन्योऽन्यव्याप्त्यादिकं कारणं स्वबुद्ध्या वक्तव्यमित्युक्तो भावसमवतारस्तदभिधानाच्चोपक्रम इति, समाप्त उपक्रमः

'से किं तं निक्खेवे' त्यादि, ( १५०-२५० ) निक्षेप इति शब्दार्थः पूर्ववत् त्रिविधः प्रज्ञप्तस्तद्यथा-ओघनिष्फन्न इत्यादि, तत्र ओघो नाम सामान्यं श्रुताभिधानं तेन निष्पन्न इति, एवं नामसूत्रालापकेष्वपि वेदितव्यं, नवरं नाम वैशेषिकमध्ययनाभिधानं, सूत्रालापकाः पदविभागपूर्वका इति। 'से किं तं ओहनिप्फन्ने' त्यादि, चतुर्विधः प्रज्ञप्तस्तद्यथा-अध्ययनमक्षीणमायः क्षपणेति। 'किं से तं अज्झयणे' त्यादि सुगमं, यावद् अज्झप्पस्साणयणमित्यादि (*१२४ २५१) इह नैरुक्तेन विधिना प्राकृतस्वभावाच्च अज्झप्पस-चित्तस्स आणयणं पगारस्सगारआगार-

णगारवेराओ अज्झयणं, इदमेव संस्कृतेऽध्ययनं, आनीयते चानेन शोभनं चेतः, अस्मिन् सति वैराग्यभावात्, किमित्येतदेवं ?, यतः अस्मिन् सति कर्मणां ज्ञानावरणीयादीनां अपचयो-ह्रास उपचितानां-प्रागुपनिबद्धानामिति, तथाऽनुपचयश्च अवृद्धिश्च नवानां-प्रत्यग्राणां तस्मादुक्तशब्दार्थोपपत्तेरध्ययनमिच्छन्ति विपश्चित इति गाथार्थः। 'से किं तं अज्झीणे' त्यादि सूत्रसिद्धं यावत् से किं तं आगमतो भावज्झीणे ?, २ जाणए उवउत्ते' त्ति, अत्र वृद्धा व्याचक्षते-यस्माच्चतुर्दशपूर्वविद आगमोपयुक्तस्यान्तर्मुहूर्त्तमात्रोपयोगकालेऽर्थोपलम्भोपयोगपर्याया ये ते समयापहारेणानन्ताभिरप्युत्सर्पिण्यवसर्पिणीभिर्नापह्रियन्ते ततो भावाक्षीणमिति, नोआगमतस्तु भावाक्षीणं शिष्यप्रदानेऽपि स्वात्मन्यनाशादिति, तथा चाह-'जह दीवा' गाहा (*१२५-२५२) यथा दीपादवधिभूतात्दीपशतं प्रदीप्यते, स च दीप्यते दीपः, न तु स्वतः क्षयमुपगच्छति, एवं दीपसमा आचार्या दीप्यंते स्वतः परं च दीपयंति व्याख्यानविधिनेति गाथार्थः। नोआगमता चेहाचार्योपयोगस्य आगमत्वाद्वाक्काययोश्च नोआगमत्वान्मिश्रत्वान्नोशब्द इति वृद्धा व्याचक्षते। 'से किं तं आय' इत्यादि, आयो लाभ इत्यनर्थान्तरम्, अयं सूत्रसिद्ध एव, नवरं संतसावएज्जस्स आएत्ति संतं-सिरिघरादिसु विज्जमाणं सावएज्जं-दानक्षेपग्रहणेषु स्वाधीनं। 'से किं तं झवणा' इत्यादि, क्षपणं अपचयो निर्जरेति पर्यायाः, शेषं सुगमं, सर्वत्र चेह भावेऽध्ययनमेव भावनीयमिति, उक्त ओघनिष्पन्नः। 'से किं तं नामनिप्फण्णे' त्यादि, सामायिकं इति नैशेषिकं नाम, इदं चोपलक्षणमन्येषां, शब्दार्थोऽस्य पूर्ववत्, 'से समासओ चउव्विहे पण्णत्ते' इत्यादि सुगमं, यावत् 'जस्स सामाणिओ' गाथा, (*१२६-२५५) यस्य सत्त्वस्य सामानिकः-सन्निहित आत्मा, क ?, संयमे-मूलगुणेषु तपे-अनशनादौ सर्वकालव्यापारात्, तस्येत्थंभूतस्य सत्त्वस्य सामायिकं भवति, इतिशब्दः सारप्रदर्शनार्थः, एतावत् केवलिभाषितमिति गाथार्थः। 'जो समो' गाहा (*१२७-२५६) यः समःतुल्यः सर्वभूतेषु-सर्वजन्तुषु, भूतशब्दो जीवपर्यायः, त्रस्यन्तीति त्रसाः-द्वीन्द्रियादयस्तेषु, तिष्ठंतीति स्थावराः-पृथिव्यादयस्तेषु च, तस्य सामा-

विश्मित्यपि पूर्ववत्॥ 'जह मम' गाहा (*१२८-२५६) व्याख्या-यथा मम न प्रियं दुःखं प्रतिकूलत्वात्,, ज्ञात्वा एवमेव सर्वजीवानां दुःख-मप्रियं प्रतिकूलत्वं न हन्ति स्वयं न घातयत्यन्यैः, चशब्दाद् घातयन्तं च नानुमन्यतेऽन्यामिति । अनेन प्रकारेण समं अणति-तुल्यं गच्छति यतस्ते-नासौ समण इति गाथार्थः । 'णत्थि य सि' गाथा (*१२९-२५६) नास्ति 'से' तस्य कश्चिद् द्वेष्यः प्रियो वा, सर्वेष्वेव जीवेषु तुल्यमनस्त्वात्, एतेन भवति समनाः, समं मनोऽस्येति समनाः, एषोऽन्योऽपि पर्याय इति गाथार्थः । 'उरग' गाहा (*१३०-२५६) उरगसमः परकृतबिल-निवासात्, गिरिसमः परीषहोपसर्गनिष्प्रकम्पत्वात्, ज्वलनसमस्तपस्तेजोयुक्तत्वात्, सागरसमो गुणरत्नयुक्तत्वात्, नभस्तलसमो निरालंबन-त्वात्, मेरुगिरिसमः सुखदुःखयोस्तुल्यत्वात्, भ्रमरसमोऽनियतवृत्तित्वात्, मृगसमः संसारं प्रति नित्योद्विग्नत्वात्, धरणिसमः सर्वस्पर्श-सहत्वात्, जलरुहसमो निष्पङ्कत्वात्, पङ्कजलस्थानीयकामभोगाप्रवृत्तेरित्यर्थः, रविसमस्तमोविघातकत्वात्, पवनसमः सर्वत्राप्रतिब-द्धत्वात्, एवंसमस्तु यः असौ श्रमण इति गाथार्थः । 'तो समणो' गाहा (*१३१-२५६) ततः श्रमणो यदि सुमनाः, द्रव्यमनः प्रतीत्य, भावेन च यदि न भवति पापमनाः, एतत्फलमेव दर्शयति-स्वजने च जने च समः, समश्च मानापमानयोरिति गाथार्थः । सामायिकवांश्च श्रमण इति सामायिकाधिकारे तस्यस्योपन्यासो न्याय्य एवेत्युक्तो नामनिष्पन्नः । 'से किं तं सुत्तालावगनिप्फन्ने' इत्यादि, यः सूत्रपदानां नामादिन्यासः स सूत्रालापकनिष्पन्न इति । इदानीं सूत्रालापकनिष्पन्नो निक्षेप इच्छावेइत्ति एषयति प्रतिपादयितुमात्मानमवसरप्राप्तत्वात्, स च प्राप्तलक्षणोऽपि न निक्षिप्यते, कस्मात् ?, लाघवार्थं, लाघवं च अस्ति इतः तृतीयमनुयोगद्वारमनुगम इति तत्र निक्षिप्त इह निक्षिप्तो भवति, इह वा निक्षिप्तस्तत्र निक्षिप्तो भवति, तस्मादिह न निक्षिप्यते, तत्रैव निक्षेप्स्यते इति, आह-कः पुनरित्थं गुणः ?, सूत्रानुगमे सूत्रभावः, इह तु तदभाव इति विपर्ययः, आह-यद्येवं किमर्थमिहोच्चार्यते ?, उच्यते, निक्षेपमात्रसामान्यादिति, उक्तो निक्षेपः ।

'से किं तं अणुगमे' इत्यादि ( १५१-२५८ ) अनुगमनमनुगमः, स च द्विविधः-सूत्रानुगमो निर्युक्त्यनुगमश्चेति, निर्युक्त्यनुगमस्त्रिविधस्तद्यथा निक्षेपनिर्युक्त्यनुगम उपोद्‌घातनिर्युक्त्यनुगमः सूत्रस्पर्शनिर्युक्त्यनुगमश्च, निक्षेपोपोद्‌घातसूत्राणां व्याख्याविधिरित्यर्थः, तत्र निक्षेपनिर्युक्त्यनुगमोऽनुगतः यः खल्वोघनामादिन्यास उक्तो वक्ष्यति चेति वृद्धा व्याचक्षते, उपोद्‌घातनिर्युक्त्यनुगमस्त्वाभ्यां द्वाभ्यां गाथाभ्यामनुगन्तव्यस्तद्यथा-'उद्देसे' गाहा, (*१३२-२५८) 'किं कइविहं' गाहा, (*१३३-२५८) इदं गाथाद्वयमतिगम्भीरार्थं मा भूदव्युत्पन्नविनेयानां मोह इत्यावश्यके प्रपञ्चेन व्याख्यास्यामः, सूत्रस्पर्शनिर्युक्त्यनुगमस्तु सति सूत्रे भवति, सूत्रं च सूत्रानुगमे, स चावसरप्राप्त एव, तत्रेदं सूत्रमुच्चारितव्यं-'अस्खलित' मित्यादि यथाऽऽवश्यकपदे व्याख्यातं तथैव वेदितव्यमिति, विषयविभागस्त्वमीषामयं-'होइ कयत्थो वोत्तुं सपदच्छेदं सुयं सुत्ताणुगमो । सुत्तालावगणासो नामादिण्णासविणिओगं ॥१॥ सुत्तफासियनिज्जुत्तिनिओगो सेसओ पयत्थादी । पायं सोच्चिय णेगमणयादिमतगोयरो भणिओ ॥२॥ एवं च-'सुत्तं सुत्ताणुगमो सुत्तालावयकओ य निक्खेवो । सुत्तप्फासियनिज्जुत्ती णया य समगं तु वच्चंति ॥३॥ शेषानाक्षेपपरिहारानावश्यके वक्ष्यामः, 'तो तत्थ णज्जिहिती ससमयपदं चे'त्यादि ततः सूत्रविधिना सूत्र उच्चारिते ज्ञास्यते स्वसमयपदं वा पृथिवीकायिकादि, परसमयपदं वा नास्ति जीव एवेत्यादि, अनयोरेवैकं बन्धपदं अपरं मोक्षपदमित्येके, अन्ये तु 'प्रकृतिस्थित्यनुभावप्रदेशास्तद्विधय' इति (तत्त्वार्थे अ.८सू. ४) बन्धपदं, कृत्स्नकर्मक्षयान् मोक्ष इति मोक्षपदं, आह-तदुभयमपि स्वसमयपदं तत्किमर्थं भेदेनोक्तमिति, उच्यते, अर्थाधिकारभेदाद्, एवं सामायिकनोसामायिकयोरपि वाच्यमिति, नवरं सामायिकपदमिदमेव, नोसामायिकपदं तु'धम्मो मंगल' मित्यादि, अनेनोपन्यासप्रयोजनमुक्तमत उच्चार्य इत्यर्थः, ततस्तस्मिन्नुच्चारिते सति केषांचिद्भगवतां साधूनां केचन अर्थाधिकाराः अधिगताः-परिज्ञाता भवन्ति, क्षयोपशमवैचित्र्यात् केचिदनधिगतास्ततस्तेषामनधिगतानामर्थाधिकाराणामभिगमनार्थं पदेन-पदसंबंधनीत्या प्रतिपदं वा वर्त्तयिष्यामः-व्याख्यास्यामः

मादि स्खलितपदोच्चारणं संहिता 'संहिता य' (*१३४-२६१) इत्यादि, तत्रास्खलितपदोच्चारणं संहिता 'परः सन्निकर्षः संहिते' (पा०१-४-१०९-ति वचनात्, यथा-करोमि भदन्त ! सामायिकमित्यादि, पदानि तु-करोमि भदन्त ! सामायिकं, पदार्थस्तु करोमीत्यभ्युपगमे, भदन्त ! इत्यामन्त्रणे, समभावः सामायिकमिति, पदविग्रहस्तु प्रायः समासविषयः, पदयोः पदानां विच्छेदोऽनेकार्थसंभवे सति इष्टार्थनियमाय क्रियते, यथा राज्ञः पुरुषो राजपुरुषः श्वेतः पटोऽस्येति श्वेतपट इत्यादिसमासभाक्पदविषयसूत्रानुपाती, चोदना-चालना तद्व्यवस्थापनं प्रसिद्धिः, यथा-करोमि भदन्त ! सामायिकमित्यत्र गुर्वामन्त्रणपरको भदन्तशब्द इत्युक्ते सत्याह-गुरुविरहे करणे निरर्थकोऽयमिति, न, स्थापनाचार्याभिमुखेन, स्थापनाचार्यामन्त्रणेन च विनयोपदेशनार्थ इति सार्थकः, एवं षड्विधं विद्धि-विजानीहि लक्षणं, व्याख्याया इति प्रक्रमाद्गम्यते, वाचि (नामि) कादिपदादिस्वरूपं त्वावश्यके स्वस्थान एव प्रपञ्चेन वक्ष्यामि, गमनिकामात्रमेतदित्युक्तोऽनुगमः ।

'से किं तं नये' त्यादि, (१५२-२६४) शब्दार्थः पूर्ववत्, सप्त मूलनयाः प्रज्ञप्तास्तद्यथा-नैगम इत्यादि, तत्थ णेगेहिंति-न एकं नैकं, प्रभूतानीत्यर्थः, मानैः महासत्तासामान्यविशेषज्ञानैर्मिमीते मिनोतीति वा नैकम इति नैकमस्य निरुक्तिः, निगमेषु भवो नैगमः, निगमाः-पदार्थपरिच्छेदाः, तत्र सर्वत्र सदित्येवमनुगताकारावबोधहेतुभूतं च सामान्यविशेषं द्रव्यत्वादि व्यावृत्तावबोधहेतुभूतं च नित्यद्रव्यवृत्तिमन्त्यं विशेषं, आह-इत्थं नैगमः तर्हि अयं सम्यग्दृष्टिरेवास्तु, सामान्यविशेषाभ्युपगमपरत्वात्, साधुवदिति, नैतदेवं, सामान्यविशेषवस्तुनोः अन्यत्वाभ्युपगमपरत्वात्तस्य, आह च भाष्यकारः-'जं सामण्णविसेसे परोप्परं वत्थुओ य सो भिण्णे । मण्णइ अच्चंतमओ मिच्छद्दिट्ठी कणादव्व ॥ १ ॥ दोहिवि णएहिं णीयं सत्थमुलूएण तहवि मिच्छत्तं । जं सविसयप्पहाणत्तणेण अण्णोण्णणिरवेक्खो ॥ २ ॥ अथवा निलयनप्रस्थकप्रामोदाहरणेभ्यः प्रतिपादितेभ्यः स्वरूपमवसेय इत्यलं प्रसङ्गेन, गमनिकामात्रमेतत् । 'सेसाण' मित्यादि,

शेषाणामपि नयानां संग्रहादीनां लक्षणमिदं शृणुत वक्ष्ये-अभिधास्ये इत्यर्थः। 'संगहित' गाहा (*१३६-२६४) आभिमुख्येन गृहीतः-उपात्तः संगृहीतः पिंडितः, एकजातिमापन्ना अर्थाः विषया यस्य तत्संगृहीतपिंडितार्थं संग्रहस्य वचनं 'समासतः' संक्षेपतः ब्रुवते तीर्थकरगणधरा इति, एतदुक्तं भवति-सामान्यप्रतिपादनपरः खल्वयं, सदित्युक्ते सामान्यमेव प्रतिपद्यते, न विशेषान्, तथा च मन्यते-विशेषाः सामान्यतोऽर्थान्तरभूताः स्युरनर्थान्तरभूता वा ?, यद्यर्थान्तरभूता न सन्ति, सामान्यादर्थान्तरत्वात्, खपुष्पवत्, अथानर्थान्तरभूताः सामान्यमात्रमेव तत्तदव्यतिरिक्तत्वात्स्वरूपवत् पर्याप्तं व्यासेन, उक्तः संग्रहः। 'वच्चइ' इत्यादि, व्रजति निराधिक्ये चयनं चयः अधिकश्चयो निश्चयः-सामान्यं विगतो निश्चयो विनिश्चयः-विगतसामान्यभावः तदर्थं-तन्निमित्तं, सामान्याभावायेति भावना, व्यवहारो नयः, क ?- सर्वद्रव्येषु-सर्वद्रव्यविषये, तथा च विशेषप्रतिपादनपरः खल्वयं सदित्युक्ते विशेषानेव घटादीन् प्रतिपद्यते, तेषां व्यवहारहेतुत्वात्, न तदतिरिक्तं सामान्यं, तस्य अव्यवहारपतितत्वात्, तथा च सामान्यं विशेषेभ्यो भिन्नमभिन्नं वा स्यात् ?, यदि भिन्नं विशेषव्यतिरेकेणोपलभ्येत, अथाभिन्नं विशेषमात्रं तत्, तदव्यतिरिक्तत्वात्, तत्स्वरूपवदिति, अथवा विशेषेण निश्चयो विनिश्चयः आगोपालाङ्गनाद्यवबोधो, न कतिपयविद्वत्संबद्ध इति, तदर्थं व्रजति सर्वद्रव्येषु, आह च भाष्यकारः-'भमराइ पंचवण्णाइ णिच्छए जम्मि वा जणवयस्स। अत्थे विणिच्छओ सो विणिच्छियत्थोत्ति जो गज्झो ॥ १ ॥ बहुतरओत्ति य तं चिय गमेइ संतेवि सेसए मुयइ। संववहारपरतया ववहारो लोगमिच्छंतो ॥ २ ॥' इत्यादि, उक्तो व्यवहार इति गाथार्थः। 'पच्चुप्पण्णगाही' गाहा (*१३७-२६४) साम्प्रतमुत्पन्नं प्रत्युत्पन्नमुच्यते, वर्त्तमानमित्यर्थः, प्रति प्रति वोत्पन्नं प्रत्युत्पन्नं भिन्नेषूक्त (प्रत्येक) स्वाभिकमित्यर्थः तद् ग्रहीतुं शीलमस्येति प्रत्युत्पन्नग्राही स ऋजुसूत्र ऋजुश्रुतो वा नयविधिर्विज्ञातव्यः, तत्र ऋजु-वर्त्तमानं अतीतानागतपरित्यागात् वस्तुस्वरूपं तत् सूत्रयति-गमयतीति ऋजुसूत्रः, यद्वा ऋजु वक्रविपर्ययात् अभिमुखं श्रुतं तु ज्ञानं, ततश्चाभिमुखं ज्ञानमस्येति

ऋजुश्रुतः, शेषज्ञानानभ्युपगमात्, अयं हि नयः वर्त्तमानं स्वलिङ्गवचननामादिभिन्नमप्येकं वस्तु प्रतिपद्यते, शेषमवस्त्विति, तथाहि-अतीतमेष्यं वा न भावः, विनष्टानुत्पन्नत्वाददृश्यत्वात् खपुष्पवत्, तथा परकीयमप्यवस्तु निष्फलत्वात् खपुष्पवत्, तस्माद्वर्त्तमानं स्वं वस्तु, तच्च न लिङ्गादिभिन्नमपि स्वरूपमुज्झति, लिङ्गभिन्नं तटस्तटी तटमिति, वचनभिन्नमापो जलं, नामादिभिन्नं नामस्थापनाद्रव्यभावा इति, उक्त ऋजुसूत्रः। इच्छति-प्रतिपद्यते, शेषमवस्त्विति, तथाहि-अतीतमेष्यं वा न भावः। विशेषिततरं-नामस्थापनाद्रव्यविरहेण समानलिंगवचनपर्यायध्वनिवाच्येन च प्रत्युत्पन्नं-वर्त्तमानं, यः कः ?-'शप् आक्रोशे' शप्यतेऽनेनेति शब्दः तस्यार्थपरिग्रहादभेदोपचारान्नयोऽपि शब्द एव, तथाहि-अयं नामस्थापनाद्रव्यकुंभा न संत्येवेति मन्यते, तत्कार्याकरणात् खपुष्पवत, न च भिन्नलिंगवचनं, भेदादेव, स्त्रीपुरुषवत् कुटवृक्षवद्, अतो घटः कुंभ इति स्वपर्यायध्वनिवाच्यमेवैकमिति गाथार्थः। 'वत्थूओ' गाहा (*१३८-२६४) वस्तुनः संक्रमणं भवति अवस्तु नये समभिरूढे, वस्तुनो-घटाख्यस्य संक्रमणं-अन्यत्र कुटाख्यादौ गमनं भवति अवस्तु, असदित्यर्थः, नये पर्यालोच्यमाने, कस्मिन् ?-नानार्थसमभिरोहणात् समभिरूढस्तस्मिन्, इयमत्र भावना-घट कुम्भ इत्यादिशब्दान् भिन्नप्रवृत्तिनिमित्तत्वाद्भिन्नार्थगोचरानेव मन्यते, घटपटादिशब्दानिव, तथा च घटनाद् घटः, विशिष्टचेष्टावानर्थो घट इति, तथा 'कुट कौटिल्ये' कुटनाद् कुटः, कौटिल्ययोगात् कुट इति, तथा 'कुम्भ पूरणे' कुंभनात् कुंभः, कुत्सितपूरणादित्यर्थः, ततश्च यदि घटाद्यर्थे कुटादिशब्दः प्रपद्यते तदा वस्तुनः कुटादेस्तत्र संक्रांतिः कृता भवति, तथा च सति सर्वधर्माणां नियतस्वभावत्वादन्यसंक्रान्त्योभयस्वभावोपगमतोऽवस्तुतेत्यलं विस्तरेण, उक्तः समभिरूढः। 'वंजण' इत्यादि, व्यज्यते व्यनक्तीति व्यञ्जनं-शब्दः, अर्थस्तु तद्गोचरः, तच्च तदुभयं-शब्दार्थलक्षणं एवंभूतो नयः विशेषयति, इदमत्र हृदयं-शब्दमर्थेन विशेषयति, अर्थं च शब्देन, 'घट चेष्टायां'-मित्यत्र चेष्टया घटचेष्टां(शब्दं)विशेषयति, घटशब्देनापि चेष्टां, न स्थानभरणाक्रियां, ततश्च यदा योषिन्मस्तकव्यवस्थितश्चेष्टावानर्थो घटशब्देनो-

च्यते तदा स घटः तद्वाचकश्च शब्दः, अन्यदा वस्त्वन्तरस्येव चेष्टाऽयोगादघटत्वं, तद्ध्वनेश्चावाचकत्वमिति गाथार्थः। इत्थं तावदुक्ता नयाः, भेदप्रभेदास्तु विशेषश्रुतादवसेयाः। साम्प्रतं एत एव ज्ञानक्रियाधीनत्वात् मोक्षस्य ज्ञानक्रियानयद्वयान्तर्भावद्वारेण समासतः प्रोच्यन्ते, ज्ञाननयः क्रियानयश्च, तत्र ज्ञाननयदर्शनमिदं-ज्ञानमेव प्रधानं ऐहिकामुष्मिकफलप्राप्तिकारणं, युक्तियुक्तत्वात्, तथा चाह-'णायंमि' त्ति (*१३९-२६७) ज्ञाते-सम्यक् परिच्छिन्ने 'गेण्हितव्वे' त्ति ग्रहीतव्ये उपादेये 'अगिण्हियव्वंमि' त्ति अग्रहीतव्ये, अनुपादेये हेये इत्यर्थः, चशब्दः खलूभयोर्ग्रहीतव्याग्रहीतव्ययोर्ज्ञातव्यत्वानुकर्षणार्थः, उपेक्षणीयसमुच्चयार्थो वा, एवकारस्त्ववधारणार्थः, तस्य चैवं व्यवहितः प्रयोगो द्रष्टव्यः-ज्ञात एव ग्रहीतव्ये अग्रहीतव्ये वा, तथोपेक्षणीये च ज्ञात एव नाज्ञाते, 'अत्थंमि' त्ति अर्थे ऐहिकामुष्मिके, तत्र ऐहिकः ग्रहीतव्यः स्रक्चन्दनांगनादिः, अग्रहीतव्यो विषशस्त्रकण्टकादिः, उपेक्षणीयस्तृणादिः, आमुष्मिको ग्रहीतव्यः सम्यग्दर्शनादिरग्रहीतव्यो मिथ्यात्वादिरुपेक्षणीयो विवक्षयाऽभ्युदयादिरिति, तस्मिन्नर्थे 'यतितव्यमेवे' ति अनुस्वारलोपात् यतितव्यमेवं-अनेन प्रकारेणैहिकामुष्मिकफलप्राप्त्यर्थिना सत्त्वेन प्रवृत्त्यादिलक्षणः प्रयत्नः कार्य इत्यर्थः, इत्थं चैतदंगीकर्त्तव्यं, सम्यग्ज्ञाते प्रवर्त्तमानस्य फलाविसंवाददर्शनात्, तथा चान्यैरप्युक्तं-'विज्ञप्तिः फलदा पुंसां, न क्रिया फलदा मता। मिथ्याज्ञानात्प्रवृत्तस्य, फलासंवाददर्शनात् ॥१॥" तथाऽऽमुष्मिकफलप्राप्त्यर्थिनाऽपि ज्ञान एव यतितव्यं, तथा चाऽऽगमोऽप्येवं व्यवस्थितः, यत उक्तं-'पढमं नाणं तओ दया, एवं चिट्ठइ सव्वसंजए। अण्णाणी किं काहिति, किं वा नाहिति छेयपावयं ॥ १ ॥' इतश्चैतदेवमंगीकर्त्तव्यं, यस्मात्तीर्थकरगणधरैरगीतार्थानां केवलानां विहारक्रियाऽपि निषिद्धा, तथा चाऽऽगमः 'गीयत्थो य विहारो बीओ गीयत्थमीसिओ भणिओ। एत्तो तइय विहारो णाणुण्णाओ जिणवरेहिं ॥ १ ॥" नह्यन्धेनान्धः समाकृष्यमाणः सम्यक् पन्थानं प्रतिपद्यत इत्यभिप्रायः, एवं तावत् क्षायोपशमिकं ज्ञानमधिकृत्योक्तं, क्षायिकमप्यंगीकृत्य विशिष्टफलसाधकत्वं तस्यैव विज्ञेयं, यस्मादर्हतोऽपि भवांभोधितटस्थस्य दीक्षाप्रतिपन्नस्योत्कृष्ट-

चरणवतोऽपि न तावदपवर्गप्राप्तिः संजायते यावज्जीवाजीवाद्यखिलवस्तुपरिच्छेदरूपं केवलज्ञानं नोत्पन्नमिति, तस्मात् ज्ञानमेव प्रधानमैहिकामुष्मिकफलप्राप्तिकारणमिति स्थितं, 'इति जो उवएसो सो णयो णाम' त्ति इत्येवमुक्तेन न्यायेन य उपदेशो ज्ञानप्राधान्यख्यापनपरः स नयो नाम, ज्ञाननय इत्यर्थः, अयं चतुर्विधेऽपि सम्यक्त्वादिसामायिके सम्यक्त्वसामायिकश्रुतसामायिकद्वयमेवेच्छति, ज्ञानात्मकत्वादस्य, देशविरतिसर्वविरतिसामायिके तु तत्कार्यत्वात्तदायत्तत्वाच्च नेच्छति, गुणभूते वेच्छतीति गाथार्थः, उक्तो ज्ञाननयः, अधुना क्रियानयावसरः-तद्दर्शनं चेदं-'क्रियैव प्रधानमैहिकामुष्मिकफलप्राप्तिकारणं युक्तियुक्तत्वात्, तथा चायमप्युक्तलक्षणामेव स्वपक्षसिद्धये गाथामाह 'णायंमि गिण्हितव्वे' इत्यादि, अस्य क्रियानुसारेण व्याख्या-ज्ञाते ग्रहीतव्ये चैवार्थे ऐहिकामुष्मिकफलप्राप्त्यर्थिना यतितव्यमेव, न यस्मात्प्रवृत्त्यादिलक्षणप्रयत्नव्यतिरेकेण ज्ञानवतोऽप्यभिलषितार्थावाप्तिर्दृश्यते, तथा चान्यैरप्युक्तं-'क्रियैव फलदा पुंसां, न ज्ञानं फलदं मतम् । यतः स्त्रीभक्ष्यभोगज्ञो, न ज्ञानात्सुखितो भवेत् ॥ १ ॥" तथाऽऽमुष्मिकफलप्राप्त्यर्थिनापि क्रियैव कर्त्तव्या, तथा च मुनीन्द्रवचनमप्येवमेव व्यवस्थितं, यत उक्तं-'चेइयकुलगणसंघे आयरियाणं च पवयणसुए य । सव्वेसुवि तेण कयं तवसंजममुज्जमंतेणं ॥ १ ॥' इतश्चैतदेवमंगीकर्त्तव्यं, यस्मात्तीर्थकरगणधरैः क्रियाविकलानां ज्ञानमपि विफलमेवोक्तं, तथा चाऽऽगमः-'सुबहुंपि सुयमहीतं किं काहिति चरणविप्पमुक्कस्स ? । अंधस्स जह पलित्ता दीवसयसहस्सकोडीवि ॥ १ ॥" दर्शिक्रियाविकलत्वात्तस्येत्यभिप्रायः, एवं तावत् क्षायोपशमिकं चारित्रमङ्गीकृत्योक्तं, क्षायिकमप्यंगीकृत्य प्रकृष्टफलसाधकत्वं तस्यैव ज्ञेयं, यस्मादर्हतोऽपि भगवतः समुत्पन्नकेवलज्ञानस्यापि न तावन्मुक्तिप्राप्तिः संजायते यावदखिलकर्मेन्धनानलभूता ह्रस्वपञ्चाक्षरोद्गिरणमात्रकालावस्थायिनी सर्वसंवररूपा चारित्रक्रिया नावाप्तेति, तस्मात्क्रियैव प्रधानमैहिकामुष्मिकफलकारणमिति स्थितं, 'इति जो उवएसो सो णओ णाम' त्ति इत्येवमुक्तन्यायेन य उपदेशः क्रियाप्राधान्यख्यापनपरः स नयो नाम, क्रियानय इत्यर्थः ।

अयं च सम्यक्त्वादौ चतुर्विधेऽपि सामायिके देशविरतिसर्वविरतिसामायिकद्वयमेवेच्छति, क्रियात्मकत्वादस्य, सम्यक्त्वसामायिकश्रुतसामायिके तु तदर्थमुपादीयमानत्वादप्रधानत्वात नेच्छति, गुणभूते वेच्छतीति गाथार्थः ॥ उक्तः क्रियानयः, इत्थं ज्ञानक्रियास्वरूपं श्रुत्वाऽविदिततदभिप्रायो विनेयः संशयापन्नः सन्नाह-किमत्र तत्त्वं ?, पक्षद्वयेऽपि युक्तिसंभवात्, आचार्यः पुनराह-'सव्वेसिंपि' गाहा (*१४०-२६७) अथवा ज्ञानक्रियानयमतं प्रत्येकमभिधायाधुना स्थितपक्षमुपदर्शयन्नाह-'सव्वेसिंपि गाहा' गाहा, सर्वेषामिति मूलनयानाम्,अपिशब्दात्तद्भेदानां च नयानां द्रव्यास्तिकादीनां बहुविधवक्तव्यतां-सामान्यमेव विशेषा एव उभयमेव वाऽनपेक्षमित्यादिरूपां, अथवा नामादीनां कः कं साधुमिच्छतीत्यादिरूपां निशम्य-श्रुत्वा तत्सर्वनयविशुद्धं-सर्वनयसम्मतं वचनं यच्चरणगुणस्थितः साधुः, यस्मात्सर्वनया एव भावनिक्षेपमिच्छंतीति गाथार्थः ॥

समाप्तेयं शिष्यहितानामानुयोगद्वारटीका, कृतिः सिताम्बराऽऽचार्यजिनभट्टपादसेवकस्याऽऽचार्यहरिभद्रस्य 'कृत्वा विवरणमेतत्प्राप्तं यत्किञ्चिदिह मया कुशलम् । अनुयोगपुरस्सरत्वं लभतां भव्यो जनस्तेन ॥ १ ॥

इति श्रीहरिभद्राचार्यरचिता अनुयोगद्वारसूत्रवृत्तिः

